# चार्वाकाणामीश्वरनिराकरणरीतिः
# CĀRVĀKĀṆĀMĪŚVARANIRĀKARAṆARĪTIḤ

**Dr. O.R. Vijayaraghavan**

**Abstract**

Attaining *mokṣa* is the prime aim of all the systems of Indian philosophy. For this almost all the systems discuss about the creation and destruction of the world, God etc. Even the Heterodox systems discuss about the refutation of God. In this article the Cārvāka views on refutation of God is discussed.

सुप्रसिद्धोऽयं विषयः चार्वाकाः नास्तिका इति। एते पृथिव्यादिभूतचतुष्टयात् देहाकारपरिणतेः चैतन्यस्य उत्पत्तिमत्वमभ्युपगच्छन्तः चैतन्यविशिष्टदेहस्यैव आत्मत्वमङ्गीकुर्वन्ति। तदुक्तं –

तथा च लोकायतिकाः परलोकापवादिनः
चैतन्यखचितात् कायात् नात्मान्योऽस्तीति मन्वते।।[1]

इति। देहातिरिक्तात्मन्यविश्वस्तैरेतैः ईश्वरोऽपि न विश्वस्यते प्रमाणाभावात्। तस्य चेश्वरस्य शरीराद्यभावेनाप्रत्यक्षत्वात् प्रत्यक्षेतराणां प्रामाण्यानभ्युपगमाच्च।

ननु तत्कथं प्रत्यक्षेतराणामनुमानादीनामप्रामाण्यं, धूमप्रत्यक्षेण वह्नि-ज्ञानसिद्धेः अनुभवात् इति चेत्, नैयायिकैः पञ्चावयवसंभूतस्य परार्थानुमानस्य प्रामाण्यम् अभ्युपगम्यते। तद्यथा पर्वतो वह्निमान् धूमात्– यो यो धूमवान् स स वह्निमान् यथा महानसः- तथा चायं- तस्मात् तथा इति। अनुमानञ्च हेतुसाध्ययोः व्याप्त्यधीनं भवति। लिङ्गभूतेन साधनेन धूमेन साध्यस्य वह्नेः विद्यमानत्वं सिद्ध्यति। तेन च पक्षवृत्तिना भाव्यम्। तत्र हेतुः साध्यसहचारी व्याप्तिमान् उपाधिरहितश्च भवेत्। व्याप्तेश्च स्वसद्भाव -मात्रेण नानुमितिकरणत्वम्, अपि तु व्याप्तिज्ञानमेव करणम्।

एवं सत्यनुमानमूलायां व्याप्तौ प्रमाणं किम्? तन्न बाह्यान्तरीक-प्रत्यक्षाभ्यां भवति। तथा हि- न तावत् प्रथमात्, बाह्यप्रत्यक्षस्य विषये-न्द्रियसंयोगजत्वात्, भूतभविष्यद्विप्रकृष्टानां सर्वेषां

तदभावात्, व्याप्तेः सर्वोपायत्वात्, सकलसाध्यसाधनानां प्रत्यक्षस्य चाशक्यत्वात्। न चव्याप्तिज्ञानं साध्यसाधनगतसामान्यज्ञानेन भविष्यति, जातेरप्रत्यक्षत्वात्, अविनाभावनिश्चया-भावाच्च। वस्तुतः सामान्यं नाम न किञ्चिन अस्त्येव। न वा आन्तरिकेण तत्सिद्धिः, अन्तःकरणस्य बाह्यार्थेऽस्वातन्त्र्यात्। तदुक्तम्- "तस्य (बाह्यप्रत्यक्षस्य) संप्रयुक्तज्ञानजनकत्वेन भवति प्रसरसंभवेऽपि भूतभविष्ययोः तदसंभवेन सर्वोपसंहारवत्याः व्याप्तेः दुर्ज्ञानत्वात्। न च व्याप्तिज्ञानं सामान्यगोचरमिति मन्तव्यम्, व्याप्यव्यापकयोरविना-भावाभावप्रसङ्गात्। अन्तः करणस्य बहिरिन्द्रियतन्त्रत्वेन बाह्येऽर्थे स्वातन्त्र्येण प्रवृत्यनुप-पत्तेः"[2] इति।

तत्रानुमानं न प्रणाणं– न चानुमानं प्रमाणं व्याप्तिज्ञानस्य, अनवस्था-दोषप्रसङ्गात्। एकस्या व्याप्तेः अन्यव्याप्तिमूलत्वात् अन्यस्या अन्यापेक्षेत्यनवस्थादोषः। नापि शब्दः व्याप्तिज्ञानप्रमाणं भवितुमर्हति, तस्य अनुमान एवान्तर्भावाभ्युपगमात् वैशेषिकैः। अनन्त-र्भावेऽपि न प्रमाणम्, आप्तवाक्यस्यैव प्रामाण्यात्, पदपदार्थयोः ज्ञानयोः व्याप्त्यधीनत्वाच्च। नाप्युपमानं तत्र प्रमाणं, तस्य संज्ञासंज्ञिसंबन्धाधारत्वात्। किञ्च तस्य अन्योच्चरितत्वेनैव प्रमाणत्वात् पदपदार्थयोः ज्ञानायोः व्याप्त्याश्रितत्वात् तत् प्रमाणं, अतः न केनापि प्रकारेण व्याप्तिज्ञानसिद्धिः।

अपि च व्याप्त्या उपाधिरहितया भाव्यम्। व्याप्तौ एकस्यां न सर्वोपाध्यभावः ज्ञातुं शक्यते। न तेषां प्रत्यक्षत्वमपि, अप्रत्यक्षाणामभावस्याप्यप्रत्यक्षत्वात्। न तेषां ज्ञानं अनुमानो-पमानशब्दैः भवितुं शक्यं, पूर्वोक्तदूषणानां पुनः प्रसङ्गात्। किञ्चोपाधिज्ञानं व्याप्तिज्ञानाधीनं, व्याप्तिज्ञानं चोपाध्यभावज्ञानाश्रितं, तच्चोपाधिज्ञानाधीनमिति अन्योन्याश्रयप्रसङ्गश्च। अतः अनुमानमूलायाः व्याप्तेः ज्ञानाभावात् नानुमानं प्रमाणम्। तदुक्तं- "उपाधीनां प्रत्यक्षत्वनियमा-संभवेन, प्रत्यक्षाणाम् अभावस्य प्रत्यक्षत्वेऽपि, अप्रत्यक्षाणामभावस्याप्रत्यक्षत्वात् अनुमाना-द्यपेक्षायामुक्तदूषणानिवृत्तेः। तत्र विध्यध्यवसायपूर्वकत्वात् निषेधाध्यावसायस्य उपाधिज्ञाने जाते तदभावविशिष्टसंबन्धरूपव्याप्तिज्ञानं, व्याप्तिज्ञानाधीनं चोपाधिज्ञानमिति परस्पराश्रयवज्र-प्रहारदोषो वज्रलेपायते। तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यवकाशः"[3] इति।

अपि च व्याप्तिः भूयोदर्शनेन प्रतिष्ठिता भवति। गते काले साध्य-साधनयोः युगपत् दर्शने जातेऽपि भाविकाले कदाचिन्न दृश्येत। तेन व्याप्तिरपि न भवेत्। अतो भूयोदर्शनेन न प्रतिष्ठिता भवेत्। हेतुसाध्ययोः व्याप्तिश्च न सर्वत्र सर्वदा द्रष्टुं शक्या। यदि सर्वत्र न दृष्टा तयोः व्याप्तिः, तदा शङ्का जायेत साध्याभावेऽपि साधनं भवेदिति। यद्यपि तयोः युगपद्दर्शनं बहुत्र जातं, तथापि तयोः भावः न सर्वत्र दृष्टः। सर्वत्र वह्न्यभाववति धूमाभावश्च प्रत्यक्षीकर्तुं न शक्यते। अतः साध्यसाधनयोः व्याप्तिः न प्रत्यक्षसिद्धा । तदुक्तं –

भूयोदर्शनगम्यापि न व्याप्तिरवगम्यते।
सहस्रशोऽपि तद्दृष्टे व्यभिचारावधारणात्॥

बहुकृत्वोऽपि वस्त्वात्मा तथेति परिनिश्चितः।
देशकालादिभेदेन दृश्यते पुनरन्यथा।।
भूयो दृष्ट्वा धूमोऽग्निसहचारीति गम्यताम्।
अनग्नौ स नास्तीति न भूयोदर्शनाद्गतिः।।[4]
अतो नानुमानस्य प्रमाणता।

शान्तरक्षितेन तत्वसंग्रहाख्ये ग्रन्थे अनुमानप्रमाणनिरूपणे पूर्वपक्षेणोद्धृतचार्वाक-मतस्याभिप्राय एवम्- न स्वार्थानुमानं प्रमाणं, त्रिरूपलिङ्गपूर्वत्वात्, मिथ्याज्ञानवत्। चक्षुरादयः परार्थाः सङ्घातत्वात् शयनासनाद्यङ्गवत्। इदमनुमानं त्रिरूपलिङ्गपूर्वत्वेऽपि दुष्टमेव। तत्र हेतोः पक्षवृत्तित्वं, साध्यवति स्थले वृत्तित्वं, तदभावस्थलेऽभावश्च विद्यत एव। तथाप्यनुमानं दुष्टं, प्रत्यक्षबाधात् इति सिद्धम्।

न त्रैरूप्यमनुमितिकरणम्, अननुमानस्थलेऽपि तस्य वृत्तित्वात्, रूप्यत्वात्। अपि च सर्वत्र साधनेऽनुमानविरोधः संभवतिविवक्षितसाध्यधर्मो न धर्मिविशेषणम्, एतत्समुदायैकदेशत्वात् इत्यनुमानेन सर्वेषामपि हेतूनां दुष्टत्वं संभवति।

अनुमानस्यैकस्यान्येन विरुद्धतां प्रतिपादयितुं शक्यते, यथा शब्दोऽनित्यः कृतकत्वात् घटवदिति चेत्, शब्दः नित्य आकाशगुणत्वात् इति प्रत्यनुमानेन विरुद्धता, शब्दः नित्यः श्रावणत्वात्, शब्दत्ववत् इत्यनुमानेन व्यभिचारित्वञ्च संभवति। अतः न स्वार्थानुमानं प्रमाणम्। तदुक्तं–

त्रिरूपलिङ्गपूर्वत्वात् स्वार्थं मानं न युज्यते।
इष्टघातकृताञ्जन्यं मिथ्याज्ञानं यथा किल ।।
भावादननुमानेऽपि न चानुमितिकारणम्।
द्वैरूप्यमिव लिङ्गस्य त्रैरूप्यं नास्त्यतोऽनुमा ।।
अनुमानविरोधस्य विरुद्धानाञ्च साधने।
सर्वत्र संभवात् किञ्च विरुद्धाव्यभिचारिणः।।[5]

इति। परार्थानुमानमपि वक्त्रपेक्षयानुवादत्वान्न प्रमाणम्। श्रोत्रपेक्षया तु तत् स्वार्थमेव। यथा चक्षुषो व्यापारे सति न परार्थव्यपदेशः, तथा श्रोत्रव्यापारेऽपि। तथा च श्रोत्रपेक्षया वचनस्य न परार्थानुमानत्वं, श्रोतृसन्तानवर्तिज्ञानहेतुत्वात् ज्ञापकत्वाच्च इन्द्रियवत् इति। अपि च अविनाभावसंबन्धज्ञानवत् साक्षादनुमेयाप्रकाशकत्वादपि न परार्थानुमानत्वं वचनस्य श्रोत्रपेक्षया।

परव्यापारापेक्षया तस्य परार्थत्वमिति चेन्न, स्वार्थेऽपि परार्थत्वप्रसङ्गात्,अपेक्षितत्वात् परत्वस्य पारावारवत्। तदुक्तं–

परार्थानुमानं तु न मानं वक्त्रपेक्षया।
अनुवादान्न तेनासौ स्वयमर्थं प्रपद्यते।।
श्रोतृव्यपेक्षयाप्येतत् स्वार्थमेवोपपद्यते।
श्रोत्रदर्शनमूलायाः को विशेषो हि संविदः।।
न परार्थानुमानत्वं वचसः श्रोत्रपेक्षया ।
श्रोतृसन्तानविज्ञानहेतुत्वज्ञापकत्वतः।।
यथेन्द्रियस्य साक्षाच्च नानुमेयप्रकाशनम्।
तस्मादस्याविनाभावसंबन्धज्ञानवन्न तत्।।
अथोच्यते परार्थत्वं परव्यावृत्यपेक्षया ।
तदप्ययुक्तं स्वार्थेऽपि परार्थत्वप्रसङ्गतः।।[6] इति।।
अतो न स्वार्थस्य परार्थस्यानुमानस्य प्रामाण्यम्।

पुरन्दरनामकेन चार्वाकेण लौकिकानुमानस्वीकारेऽपि अलौकिकानुमानस्वीकारे न सम्मतिः प्रदर्शिता। "पुरन्दरस्तूक्तम्– लोकत्रासिद्धमनुमानं चार्वाकैरपीष्यत एव। यस्तु कैश्चिल्लौकिकमार्गम् अतिक्रम्यानुमानमुच्यते, तन्नि-षिध्यत"[7] इति वचनात्।

परन्तु इतरैः चार्वाकैः उभयविधस्याप्यनुमानस्य प्रामाण्यं नेष्यत एव। यद्येवं धूमादिज्ञाना-नन्तरं वह्न्यादिज्ञानात् वह्न्याद्यर्थे प्रवृत्तिः कथमिति चेत्, पूर्वं बहुशः प्रत्यक्षेण दृष्टत्वम्, भ्रान्त्याऽथवा भवेत्। क्वचिच्च मणिमन्त्रौषधिवत् यादृच्छिकः। नाप्यनुमानशब्दयोः प्रामाण्यं, तयोः व्याप्त्यधीनत्वात्। अत ईश्वरसिद्धौ प्रत्यक्षप्रमाणाभावात् नेश्वरसिद्धिः।

ननु वेदाः प्रमाणमीश्वरसिद्धौ, तेन विना तेषामुत्पत्त्यसंभवात्। वेदकर्तृत्वं न चास्मदादीनाम्, असर्वज्ञत्वात्। अतः वेदकर्तृत्वेन सर्वज्ञ ईश्वरः अभ्युपगन्तव्य इति चेत्, उच्यते– न अस्माभिः बार्हस्पत्यानुयायिभिः वेदस्य प्रामाण्यमभ्युपगम्यते, तस्य अनृतत्वात्, व्याघातत्वात्, पुनरुक्ति-दोषघटितत्वाच्च। तदुक्तं– "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः"[8] इति।

तद्यथा– "चित्रया यजेत पशुकामः", "पुत्रकामः पुत्रेष्ट्या यजेत" इति श्रूयते। परन्तु इष्टिसमनन्तरं पुत्रपश्वादिकं नोपलभ्यते। तेनानृतत्वं वेदस्य सिद्ध्यति। न च कालान्तरे तद्भवतीति वाच्यम्, कर्मणां समनन्तरफलत्वेन लोके दृष्टत्वात्। अपि च कालान्तरे कर्मणः प्रध्वंसात् फलं कथं भवेत्। सत्यपि फले कालान्तरे तस्य कारणमन्यद्भवेत्। न चादृष्टद्वारा तन्निर्वहतीति वाच्यम्, तत्सिद्धावेव प्रमाणाभावात्। अतो वेदस्यानृतत्वं सिध्यति।

एवमग्निहोत्रादीनां वेदैकदेशत्वात् मिथ्यात्वं, चित्रादिचोदनावत् इत्यसंवादः, प्रमिते यजमानस्य स्वर्गगमकत्वं श्रूयते, तत्रात्मनो निर्देशः क्लिष्टः परोक्षत्वात्। कायस्य न स्वर्गप्राप्तिः, तद्विपरीतभस्मीभावोपलम्भात् इति विसंवादश्च। अतः असंवादसंवादाभ्यां न प्रमाणं वेदः। एवम् "उदिते होतव्यम्", "अनुदिते होतव्यम्", "समयाभ्युहिते होतव्यम्" इति होमकालत्रयमपि

विधाय पुनः कालत्रयस्यापि निषेधः क्रियते। न चार्थवादमात्रमिति वक्तव्यं, यतः -न चात्र न हि निन्दान्यायो युज्यते, कालत्रयस्यापि निषेधात् कस्य प्रशंसा विधीयत इति। अतः परस्पर-विरुद्धार्थोपदेशत्वात् व्याघातादप्रमाणं वेदः।

बाधितार्थबोधकत्वमपि क्वचित् दृश्यते। "उत्थाना वै देवगावो वहन्ती" इति श्रूयते। न हि गावः उत्थानागच्छन्त्यः दृश्यन्त इति बाधितार्थबोधकत्वम्। पौनरुक्त्यमपि वेदे दृश्यते। "त्रिप्रथमामन्वाह त्रिरुत्तमम्" इति प्रथमोत्तमयोः त्रिरुक्तत्वश्रवणात् पौनरुक्त्यं, सकृदुच्च-रितत्वेनैव प्रयोजनसम्पत्तेः त्रिर्वचनानर्थक्यम् इति पौनरुक्त्यदोषात् वेदाः अप्रमाणम्।

अपि च ईश्वरसिद्धौ तदुक्तत्वात् वेदाः प्रमाणम्, ईश्वरसिद्धिश्च प्रमाणवेदकर्तृत्वेन इति अन्योन्याश्रयदोषोऽपि, अतोऽप्रमाणं वेदाः। ततश्च वेदकर्तृत्वेन नेश्वरसिद्धिः। अपि च दृश्यते वेदः जीविकार्थम्। भण्डैः, धूर्तैः निर्मितः इति। तदुक्तम् –

त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः।
जर्भरी तुर्फरीत्यादि पण्डितानां वचः स्मृतम्।।
अग्निहोत्रं त्रयो वेदाः त्रिदण्डं भस्मकुण्डनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः।।[9]

अथ वेदकर्तृत्वेन अनभ्युपगमेऽपि क्षित्यादीनां कर्तृत्वेन ईश्वरोऽभ्युपगन्तव्य एव, तेषां कार्यत्वादिति चेन्न, कार्यकारणभावस्यैव अनभ्युपगमात्। कार्यकारणयोश्च मध्ये संबन्धः कल्पित एव। कार्यस्य कारणस्य च युगपत् बहुधा दृष्टत्वात् अस्यायं कारणमिति मतिः भ्रान्तिरेव। उभयोरपि साहचर्यं बहुधा दृष्टमपि कदाचित् कालान्तरे न स्यात्। तदुक्तं– "शतकृत्वोऽपि तद्दृष्टौ व्यभिचारस्य संभवात्"[10] इति। अतः कार्यकारणभाव एव नास्ति। तेन चेश्वरसिद्धिः नास्त्येव।

अथ कथमस्य जगतः स्थित्यादिकमिति चेत्, स्वाभाविकमेवेति ब्रूमः। तदुक्तं--

अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिः।।[11] इति।

अतः चार्वाकाणां प्रत्यक्षमेकं प्रमाणम्। यत् प्रत्यक्षं तस्य वृत्तित्वं, यन्न प्रत्यक्षं तस्यासत्वं चाभ्युपगच्छन्ति। अप्रत्यक्षभूतस्यापि सद्भावाङ्गीकारे निर्धनी कश्चन स्वकल्पनयैव निर्धनिकाताम् अपाप्स्यताम्। एतत्तु लोकविरुद्धम्। तदुक्तं- किञ्चाप्रत्यक्षमप्यस्ति, तथाप्युपगम्यते चेत् जगदद्भुतमेव स्यात्, स्वर्गराशीः मे अस्तीत्यनुसन्धाय हेलयैव दुःसत्यं दलयेत् इति। अतः प्रत्यक्षमेकं प्रमाणम्। परिदृश्यमानं जगदेव एकं तत्वम्। पञ्चेन्द्रियैः प्रत्यक्षमानानामेव वास्तविकत्वम्। प्रत्यक्षबाह्यानां न सत्यत्वम्। अतः इन्द्रियगोचर-

विषयपूर्णमिदं जगत्। तदुक्तं- एतावानेव "लोकोऽयं यावानिन्द्रियगोचरः"। पञ्चप्रकारदृष्टमेव वस्तु तत्वं प्रमाणपदवीमवगाहते इति। अतः प्रत्यक्षेतरस्य सद्भावे प्रमाणाभावात् नेश्वरसिद्धिः।

केचित्तु चार्वाकैकदेशिनः प्रत्यक्षसिद्धस्य राज्ञः ईश्वरत्वं मन्यन्ते। लोकसिद्धो राजा परमेश्वरः, "लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः"[12] इति वचनात्।

एवमुपसंहारः- अर्थकामावेव पुरुषार्थं मन्यमानानां परलोकमपह्नुवानानां प्रत्यक्षेतरस्य प्रामाण्यमनभ्युपगन्तृणाम् अनृतत्वादिदोषेभ्यः वेदस्याप्रामाण्यं स्वीकुर्वतां, कार्यकारणवादे अविश्वासप्रदातृणां, बृहस्पत्यनुयायिनां चार्वाकाणां मते न ईश्वरसिद्धिः। तेष्वेव एकदेशिनः केचन प्रत्यक्षसिद्धस्य राज्ञः परमेश्वरत्वमङ्गीकुर्वन्ति इति।

**Notes :**

---

[1] जयन्तभट्टः न्यायमञ्जरी, पृ. 3
[2] सायणमाधवः सर्वदर्शनसंग्रहः पृ. 7
[3] सायणमाधवःसर्वदर्शनसंग्रहः, पु.19
[4] जयन्तभट्टःन्यायमञ्जरी, पु.109
[5] शान्तरक्षितःतत्वसंग्रहः, पु. 520
[6] शान्तरक्षितःतत्वसंग्रहः, पु. 524
[7] तत्वसंग्रहपञ्जिका, पृ. 528
[8] गौतमः न्यायसूत्रम् 2.1.56, पु. 79
[9] सायणमाधवःसर्वदर्शनसंग्रहः, पु. 10
[10] जयन्तभट्टःन्यायमञ्जरी, पु. 108
[11] सायणमाधवःसर्वदर्शनसंग्रहः, पु.11
[12] सायणमाधवः सर्वदर्शनसंग्रहः, पु. 12

**Bibliography :**

1. अक्षपादः –न्यायसूत्रम्, काशीसीरीज ग्रन्थमाला, वाराणसी
2. कमलशिलः –तत्वसंग्रहदीपिका, बौद्धभारती सीरीज, वाराणसी, 1968
3. जयन्तभट्टः-न्यायमञ्जरी, चौखम्बा संस्कृतसीरीज, 1971
4. सायणमाधवः –सर्वदर्शनसंग्रहः, परिमला पब्लिकेशसन्स, अहमदाबाद्, 1981
5. शान्तरक्षितः---तत्वसंग्रहः, बौद्धभारती सीरीज, वाराणसी, 1968

# जैनमतस्वरूपंबौद्धमतापेक्षयातत्प्राचीनत्वञ्च
# MAJOR ELEMENTS OF JAINISM AND IT'S ANCIENTNESS THAN BUDDHISM

**Dr. B. Keshavaprapanna Pandey**


### Abstract

The Jaina dharma presents upon its observance in thought, word, and deed at the individual as well as social levels. The holy text *Tattvārtha-Sūtra* sums it up in the phrase "*PARASPAROPAGRAHO JĪVANAM*"[1] (All life is mutually supportive). The major principles[2] of Jainism as given below are foundation pillars of Jain philosophy. Such as

1. *Ahiṁsā*[3] *(non-violence)*
2. *Satyam (Truthfullness)*
3. *Aparigraha(non-possessiveness)*
4. *Asteyaṁ (Non-stealing)*
5. *Brahmacarya (Celibacy)*
6. *Anekāntavāda*[4] *(Non-one-endedness or Nonsingular Conclusivity)*

Jainadharma gives much attention on Aparigraha[5] (non-possessiveness) towards material things through Self-control, Self-imposed penance etc. Thus on so many necessary things in Jainism, much consideration has been presented in this manuscript. This article consists five sub-topics such as-- (1) प्रस्तावना (Introduction), (2) जैनाचार्याणामुत्पत्तिः संस्कृतवाङ्मयेतेषाम-प्रतिमयोगदानञ्च (A brief details of Jainacharyas and their unique contribution in Sanskrit literature), (3) जैनमतस्यतात्त्विकंस्वरूपम् (Major subject of Jainism), (4) बौद्धमतापेक्षयाजैनमतस्यप्राचीनत्वम् (Antiqueness of Jainism than Buddhism), (5) बौद्धजैनमतयोर्विशेष: (Differences between Jainism and Buddhism). According to the topic, I have given the overview on the oldness (than Buddhism) and principle views of Jainism.

## 1. प्रस्तावना

तत्र किंप्रकारकोऽयं धर्मो जैनस्य? के च ते तीर्थकराह्वयाः जैनाचार्याः? कौ च तौ प्रसिद्धौ पार्श्वमहावीराचार्यौ जैनधर्मस्य? एको वा बहुप्रकारको वा जैनसङ्घः? समाने मते एव दृश्यमानस्यापरमतस्य कदा वा प्रादुर्भावः? यदि तादृशः सङ्घभङ्घस्तत्र तर्हि कस्माद्वा कारणात्। के नामैतेषां जैनमतावल्म्बिनामाचार्याणां धर्मग्रन्थाः? कीदृशानि च जैनमत-स्वरूपाणि? कति वा वर्णा जैनैस्स्वीकृताः? कति चाश्रमा एतैरनुसृयन्ते? कीदृशानि चाचाराद्यनुष्ठानान्येतेषाम्? किंस्वरूपाश्च यमनियमाः? के च ते साम्यवैषम्ये जैनबौद्धमतयोः? कीदृशश्च तयोः जैनबौद्धमतयोः पारस्परिकसम्बन्ध इत्येतेऽन्ये चैतादृशाः प्रश्नाः असकृत्प्रादुर्भदुर्भ-वन्त्यस्मन्मनसि विशेषतश्च यदा समुपगच्छामो वयमेतादृशे महति पुरातने जैनसमुदाये। एतादृशान्सर्वान् प्रश्नान् मनसि निधायानतिविस्तीर्णतया यथासम्भवमिह प्राचीनाचार्यग्रन्थ-कृच्छैलीं नवीनां लेखपद्धतीञ्चानुसृत्य प्रस्तौमि मदीये लेखे ।

## 2. जैनाचार्याणामुत्पत्तिः संस्कृतवाङ्मये तेषामप्रतिमयोगदानञ्च --

प्राचीने किल सुविश्रुताभिधेयः कश्चिदृषभदेवाख्यो महामुनिरवततारास्मिन्भारतवर्षे। मिथ्यात्वमोहाज्ञानाद्यसंख्येयदुर्गुणप्रबद्धदयनीयदशापन्नान् दीनान् जीवानभिवीक्ष्य परमकरुणा-परवशः परमकारुणिको भगवान् सुकुमारहृदयः स आदिमस्तीर्थङ्करः समीचीनदर्शनज्ञानरूपं सर्वजीवोपकारकं सर्वविधात्यन्तिकदुः खापहं विशुद्धनिश्चितज्ञानादिपूर्वकचारित्रात्मकञ्च मोक्ष-शास्त्रं विरचय्य जिनदर्शननामधेयमप्रतिमं दर्शनमिममस्मिन्कल्पे प्रकटयामासेति प्रख्यापयन्त्येत-त्संप्रदायधुरन्धराः। तदनु चाचार्याजितनाथाभिधादयो महावीराख्यपर्यन्ताः त्रयोविंशतिस्ती-र्थकराः स्वस्वकालेषु निजदिव्यज्ञानकिरणैः कृपणावस्थापन्नानां किंकर्तव्यविमूढानामज्ञानिनां मोहाद्यज्ञानतमांसि अपसस्नुरिति ज्ञायते जिनग्रन्थेषु। भारतस्य पुण्यभूम्यां वाराणस्यामेव सप्तम-स्तीर्थकरः सुप्रख्यातः सुपार्श्वनाथः, तथैव त्रयोविंशतितमः महान् तीर्थकरः आचार्यः पार्श्वनाथश्च जनिमलभताम्। अपि च वाराणसीनगर्या एवानतिदूरवर्तिनि चन्द्रपुराख्ये ग्रामेऽष्टमः चन्द्रप्रभुः, एकादशः श्रेयान्सनाथश्च जैनमतसंप्रदाय उभावपि सुप्रसिद्धौ महान्तौ सारनाथक्षेत्रे बभूववतुरिति श्रूयते। एतेषु ख्यातेषु तीर्थकरेष्वेवात्यन्तं सुप्रसिद्धतमावन्तिमौ पार्श्वनाथमहावीरौ समभवतां ययोर्महानुभावयोरुपासनास्थलानि मन्दिराण्यद्यापि गोचरीभवन्ति भारतस्य बहुषु क्षेत्रविशेषेषु।

तत्र ज्ञातव्योऽयमंशो यद् बुद्धापरनामकशाक्यमुनिः गौतमसमकालीनतया सुप्रख्यातयश-स्तया चाचार्यस्य श्रीवर्धमानमहावीरस्य तस्मिन्नेव जैनमतसंस्थापकत्वमधिरोपयन्ति जिनसं-प्रदायाचार्याः केचिदस्मिन्सम्प्रदाये। परं तत्र पूर्वतीर्थकरप्रचारितमेव जिनमतं पुनः बहुविधोपायैः प्रचार्य स्वपूर्वाचार्यमतमिमं संररक्ष स महावीरपुरुषो न तु स्वबुद्धिपरिकल्पितं किञ्चन नूतनम-पूर्वमतमित्यपरे तत्रैव संप्रदायविदो वदन्ति ।

महात्माऽयं महावीरपुरुषः[6] ख्रिस्तशकात्प्राक् सप्तविंशत्युत्तरपञ्चशततमे हायने निर्वाणपद-मगमदिति जैनग्रन्थेभ्योऽवगम्यते। अपि च बौद्धग्रन्था अपि तमाचार्यं बुद्धसमकालीनं मन्य-न्तेऽर्थात् स्वकीयमतानुसारेण ख्रिस्तशकात्प्राक् पञ्चशताब्दिकमभिमन्यन्त इत्यस्ति किञ्चिदत्र वैमनस्यम्। प्रायस्तावत्सर्वैः बौद्धग्रन्थेषु तथा जैनग्रन्थेषु च कृतभूर्यनुसन्धानैः महद्भिर्विद्वद्भिः निर्विवादमिदं बाढमङ्गीक्रियते यज्जिनमतप्रतिपादकः श्रीमहावीरः शाक्यमुनेः गौतमात्प्राचीन एवेति।

पूर्वं किल गुप्तकाले मौर्यशासके चन्द्रगुप्ते महाराजे भूमिमिमां शासति सति भद्रबाहुस्वामी नामा महान् कश्चिज्जैनसंप्रदायाचार्यः स्वतपस्सामर्थ्याद् भाव्यत्यन्तकष्टकरदुर्भिक्षकालमवबुद्ध्य स्वशिष्यबृन्दैस्समन्वितः शिष्यभूतेन महाराजेन चन्द्रगुप्तेनानुगम्यमानो दक्षिणपथमगमदिति श्रूयते। ततः परमयं जैनसम्प्रदायो दिगम्बरश्वेताम्बररूपेण द्विधा बभूव इति[7] जैनग्रन्थानुसन्धानेन ज्ञायते। तत्र आचार्यभद्रबाह्वोः येऽयायिनोऽभवन् ते दिगम्बरा, तथा उत्तरपथवर्तिनश्च जैनमतावलम्बिनः श्वेताम्बरा इति प्रथिताश्च।

तत्र दिगम्बरजैनग्रन्थाः तावदतिप्राचीना इति विख्याताः। तत्र ख्रिस्तीयप्रथमशताब्दिकेन आचार्येण उमास्वामिना [8]**जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षेति** तत्त्वविषयात्मकम् अमूल्यं जैनमतसारस्वरूपं सप्ततत्त्वप्रतिपादनात्मकं तत्त्वार्थाधिगममोक्षशास्त्रं निरमायि। अयं महात्मा उमास्वामी महात्मनः कुन्दकुन्दाचार्यस्यात्यन्तप्रियशिष्य इति ज्ञायते। महात्मना कुन्दाचार्येणापि जैनमतस्वरूपविवेचनात्मकाः बहवो ग्रन्थाः विलिखिताः तेषु प्रख्याताः यथा– **नियमसारः, पञ्चास्तिकायः, समयसारः प्रवचनसारः, अष्टपाहुदोरयणसारो**ऽन्येऽपि बहवो ग्रन्थाश्च। अपि च प्राकृतभाषायामपि कतिपयजैनाचार्याणां तन्मतप्रतिपादकपूर्वकानां ग्रन्थविशेषानामुत्कृष्टाः रचनाः तस्मिन्काले तद्भाषाया उत्तरोत्तरवर्धने महद्विशेषयोगदानमावहन्ति। तादृशेष्वाचार्येषु महात्मा **भूतबलिश्चाग्रणी**र्भवति। महात्माऽयं **धवल-जयधवल-महाधवलाख्यान्** ग्रन्थान् प्राकृतभाषायाम् विरचय्य जैनमतस्योत्तरोत्तरप्रचारे प्राकृतभाषाया वर्धने च स्वकीयां महतीं सेवामदादिति जैनग्रन्थेभ्यो ज्ञायते। तथैव ख्रिस्तीयसप्तमशताब्दिकेन महाविदुषा नेमिचन्द्रसिद्धान्तचक्रवर्तिना च जैनाचार्यमहानुभावेन **जयधवलैकांशमूलको** महोत्तमो **गोम्मटसारनामको**ऽनर्घो ग्रन्थो व्यरचि । एवमेतादृशाः अनेकेऽन्ये जैनग्रन्था तदात्वे बहुभिः जैनाचार्यैर्ग्रथिता अद्यत्वेऽपि तदनुयायिभिरनेकैर्विद्वद्भिश्च तन्मतपरिपोषका ग्रन्था ग्रथ्यमानास्सन्ति विस्तरभयान्नात्र निर्दिश्यन्ते।

एतदतिरिच्य संस्कृतवाङ्मये जैनविदुषां[9] योगदानरूपाः बहवो न्यायव्याकरणसाहित्यपुराणादिदर्शनग्रन्था दिगम्बरजैनप्रणिता इति विख्यातास्तेषु कतिचिदेव मुख्यतमाः प्रसङ्गादिह निर्दिश्यन्ते। तत्र व्याकरणशास्त्रे अमोघाचार्यकृता शाकटायनामोघवृत्तिः, यक्षवर्मकृतः शाकटायनचिन्तामणिः, श्रीपूज्यपादस्वामिकृतं जैनेन्द्रव्याकरणम्, अभयनन्दिकृता जैनेन्द्रमहावृत्तिः, श्रीप्रभाचन्द्रकृतो जैनेन्द्रशब्दार्णवः, शर्ववर्मकृतकलापव्याकरणम्, पण्डितराजवर्धमानकृतो गणरत्नमहोदधि इत्येवमेतादृशाश्च बहवो ग्रन्थाः संस्कृतवाङ्मये विलसन्ति। न्यायशास्त्रे च श्रीप्रभाचन्द्रकृतप्रमेयकमलमार्त्तण्डः, श्रीधर्मभूषणयतिकृता न्यायदीपिका, विद्यानन्दिस्वामिकृता अष्टसहस्र्याप्तपरीक्षाप्रमाणपरीक्षा, प्रभाचन्द्रकृतो न्यायकुमुदचन्द्रोदय इत्येतादृशाः बहवो ग्रन्था न्याशास्त्रे प्रसिद्धा न्यायविदुषां गिरामलङ्कुर्वन्ति। साहित्यशास्त्रेऽपि अजितसेनकृतोऽलङ्कारचिन्तामणिः, वादीभसिंहकृतो गद्यचिन्तामणिः श्रीभगवज्जिनसेनकृतः पार्श्वाभ्युदयः, श्रीहस्तमल्लिकविकृता सुभद्रनाटिका इत्येतादृशाः बहवस्साहित्यग्रन्था एतेषां दृश्यन्ते। दर्शनग्रन्थेषु श्रीअकलङ्कदेवकृतं राजवार्तिकम्, विद्यानन्दिकृतं श्लोकवार्तिकम्, उमास्वामिकृतं मोक्षशास्त्रञ्चान्ये ग्रन्था प्रसिद्धाः। गणितशास्त्रे श्रीमद्भद्रस्वामिकृता भद्रबाहुसंहिता सार्धद्वयद्वीपप्रज्ञप्तिश्च प्रकाशते। पुराणेषु च प्रसिद्धाः पुराणग्रन्थाः जिनसेनाचार्यकृतमादिपुराणम्, रविषेणकृतं पद्मपुराणम् (जैनरामायणम्) वादिराजसूरिकृतं पार्श्वपुराणमित्यादयो पुराणग्रन्थाः जैनग्रन्थेषु प्रधानतमा।

### 3. जैनमतस्य तात्त्विकं स्वरूपम्

इतः परं विशिष्य जैनमतस्य किं वा तात्त्विकं स्वरूपमित्यत्र किञ्चिदिव विविच्यते। प्रायः सर्वेष्वपि धर्मेषु अस्मिञ्जगति कतिपयभारतीयधर्मान्विहाय ईश्वरो जगतः कर्ता इत्याख्यायते। भारतीयेषु मतविशेषेषु अनीश्वरवादिनो मतविशेषा वेदाबाह्याः इत्याहूयन्ते। क्षणिकमात्रसुखदुःखादिकारणमज्ञानं बन्धः, तदभवश्च मोक्ष इत्यन्यान्यपर्यायशब्दैः प्रायेण सर्वाण्यपि मतानि प्रख्यापयन्ति। तत्र साङ्ख्यवद्बौद्धजैनादयोऽपि जगत्कर्तृत्वान् ईश्वर इति न वदन्ति। तत्र जैनानां मते **षड्द्रव्याणि जीवपुद्गलाकाशकालधर्माधर्माः**[10]।

तत्र जैनमते **बद्धदशायामारभ्यामुक्तेश्च चतुर्दशगुणस्थानानि**[11] प्रोक्तानि। तत्र आद्यानि पञ्चश्रावकाणामनुरोधेन। ततः सप्तस्थानानि जैनाचार्याणामभ्यासपरिपाकापेक्षया। तत्र त्रयोदशं स्थानं संयोगकेवलिनः। स एवार्हत्पदभाक्। परं तेष्वाचार्येषु केचिदेव तीर्थकरत्वं प्रतिपद्यन्ते न तु सर्वेऽपि। चतुर्दशं स्थानं पुनरयोगकेवलिनः। अन्तिमौ द्वौ जीवन्मुक्तौ परमात्मानाविति कथ्येते। अपि च जैनसम्प्रदाये सप्तपदार्था यथा क्रमेण **जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षा**[12] इत्युक्ताः। तत्राजीवपदेन पुद्गलादीनि पञ्चद्रव्याणि गृह्यन्ते आस्रवो नाम कायवाङ्मनःकर्मयोगः। बन्धो नाम पुद्गलात्मनोर्योगः। आस्रवनिरोधः संवरः। तपो निर्जरा। अजीवाज्जीवस्य पृथक्स्थितिः मोक्षः। हिंसाऽसत्यस्तेयाब्रह्मपरिग्रहाः पापानि। हिंसा नाम प्रमत्तयोगात्प्राणव्यरोपणम्। तथैवासत्यं प्रमत्तयोगाद् असदभिधानम्। स्तेयन्तु प्रमत्त-अदत्तादानम्। अब्रह्म च प्रमत्तमैथुनम्। परिग्रहश्च मूर्च्छाममत्वपरिणामः। इत्येवमादिकाः जैनमतस्याधारभूततत्त्वविषयाः प्रमुखा भवन्ति।

अपि च पुरा किल त्रय एव वर्णा[13] गुणकर्मानुरोधेन समाम्नाता ऋषभदेवेनास्मिन् कल्पे। तत्पुत्रेण ब्राह्मणवर्णोऽपि निर्मित इति जैनानामाशयः। त्रिपञ्चाशत्सन्ति चैतेषां गृह्यसंस्काराः। तत्र त्रैवर्णिकाचारविषयको भद्रबाहुसंहिताख्यो ग्रन्थः प्रसिद्धः। संस्कारकर्मणि पुराणवाक्यानि पठ्यन्त इति भाति। जैनमतानुसारेण अन्यधर्मावलम्बिनोऽपि जैनधर्मे एव गृह्यन्ते।

### 4. बौद्धमतापेक्षया जैनमतस्य प्राचीनत्वम्

इहेदानीं बौद्धमतापेक्षया जैनमतस्य प्रामाणिकं प्राचीनत्वं तयोर्मध्ये कश्च विशेष इत्यत्र किञ्चिदिव विलिख्यते बहूनामत्र विप्रतिपत्तित्वात् । तत्र बौद्धानां यथा प्राचीनग्रन्थाः समुलभ्यन्ते न तथा जैनानामित्यज्ञाः बहवोऽनधीतजिनशास्त्राः चिरं जिन इति शाक्यमुनिगौतमस्यैव अपरं नाम इति मन्यन्तेस्म।

तत्र जैन-बौद्ध इति उभयमतवादिनः स्वस्वान्तिमधर्मप्रवक्तारं जिन-अर्हत्-महावीर-सर्वज्ञ-सुगत-तथागत-सिद्ध बुद्ध-सम्बुद्धपरिनिर्वृत्त-मुक्तेत्यादिनामभिः निर्विशन्ति। अपि च स्वस्वतीर्थ-करमीश्वरवत् सम्मानयन्ति मूर्त्यादिभिश्च पूजयन्ति। तथा च ते स्वमतस्याहिंसालक्षणे धर्मविशेषे दत्तनिर्भरा इति च वदन्ति। तत्र उभयोरपि सम्प्रदाययोः प्राचीनग्रन्थगभीराध्ययनेन अपि च वेबरकोबीप्रभृत्याङ्गलेयानां तत्र कृतभूरिगहनाध्ययनानां लिखितपरिशीलनात्मकलेखैश्च सप्रमाणं स्पष्टं ज्ञायते यज्जैनमतं बौद्धमतादतीव भिन्नम्, अपि चैतेषामाचार्यपरम्परा भिन्ना, एषां संज्ञाविशेषाश्च भिन्नाः। न केवलमेतौ धर्मावन्यौ किन्तु परस्परविरुद्धभूतावेतौ, अपि च जिनमतं तयोः प्राचीनतरञ्च।

तत्र जिनशास्त्रज्ञातुकामाः कृतानेकपरिश्रमाः नव्याः आङ्गलेया जैकोबीप्रभृतयो[14] विद्वांसो जैनसिद्धान्तादिग्रन्था बौद्धमतग्रन्थेभ्यो महता कालेनाव्यवहिता इति स्पष्टं प्रमाणयन्ति।अपि च श्वेताम्बरसाम्प्रदायिकग्रन्था देवर्धिसमये लिखिता इति आचार्यो बाहुरपि ज्ञापयति। तत्राद्यम् उपलभ्यमानग्रन्थानां सिद्धान्तग्रन्थग्रथनकालापेक्षया अर्वाचीनत्वेऽपि तेषां सम्प्रदायपरम्परया-गतया प्राचीनत्वम् अप्रतिहतमिति पाश्चात्याः बाढं निरूपयन्ति। दिगम्बरजैनग्रन्थाः केचिद्यथा कुन्दकुन्दाचार्यकृताः प्रवचनसारादयोऽतिप्राचीनाः। ख्रिस्तीयप्रथमशताब्द्यां कुन्दकुन्दाचार्यो बभूवेति **'इन्डियन् अंण्टिक्करि'**[15] इत्याख्यस्य ग्रन्थस्य एकविंशतितमे खण्डे मुद्रितदिगम्बर-जैनपट्टवल्यनुसारेण ज्ञायते। तत्र ख्रिस्तीयपञ्चमशताब्द्यां समुत्पन्नेभ्यः श्वेताम्बरजैनदेवार्धिगणि-विरचितग्रन्थेभ्यो दिगम्बरजैनाचार्याणां कतिपयग्रन्थाः प्राचीनतरा इति सम्यक् प्रतिभाति। सम्यगधीतेषु तेषु ग्रन्थेषु ज्ञायते यज्जैनाः **जिनमहावीरार्हत्सिद्ध** इति संज्ञाभिः प्रायो निर्दिशन्ति स्वतीर्थकरान् महावीरप्रमुखान् आचार्यान्, तथा पारम्परिकबौद्धाः **सुगत-तथागतेत्यादिनामभिः** स्वाचार्यं शाक्यमुनिनम् इत्यामनन्ति ।

तथैव उभयोरपि मतयोः अन्यान्यप्यनेकानि नामानि च यथार्थाक्षराणि प्रयुज्यन्ते। बौद्धमतविरुद्धं च मनुजानां देवरूपेण क्रियमाणं पूजनं मूर्त्यापादनञ्च निर्विवादस्य सर्वसम्मतप्राचीनत्वस्य वैदिकधर्मस्य तावद् एतादृक्पूजनं प्रधानं लक्षणम् । यदि जैनैस्तदन्येभ्यः परिगृहीतमिति स्विक्रियेत तर्हि तद्वैदिकमतानुयायिभ्यो भवितुमर्हति न तु तादृक्पूजनवृद्धेभ्यो बौद्धेभ्यः। यो यो हि मतविशेषो येषां सोऽन्येभ्यो एव गृहीतोऽभविष्यदिति तु नावश्यकम्। सर्वेऽसाधारणा महापुरुषा बाढमेतादृक्पूजनकल्पने सुसमर्थाः। अनेनैवाहिंसालक्षणसाम्यं व्याख्यातम्। इदं तावदत्रानुसन्धेयम्। बौद्धाः स्वप्राचीनग्रन्थेषु महावीरप्रमुखजिनवरतिर्देशे न कुत्रापि नवीनमतप्रचारकत्वं तेष्वापादयन्ति। किन्तु प्रचलितमतप्रतिपादकत्वमेव जैनानामिति बौद्धग्रन्थकृदाशयोऽनुमीयते। अनेन जैनमतस्य बौद्धमतापेक्षया प्राचीनत्वं सिद्ध्यति।

## 5. बौद्धजैनमतयोर्विशेषः

अपि चेदानीं दिङ्मात्रेणोभययोर्मतयोः विद्यमानो विशेष उपस्थाप्यत इह। बौद्धमतप्रवर्तको भगवान् शाक्यमुनिः षड्वर्षाणि यावत् फलाकाङ्क्षया तपस्यामुग्रामाचर्य ततः तपसो निरर्थ-कतामवगम्य कालान्तरेण सम्बोधिं संजगाम। नवीनं च स्वकीयमेकं मतं प्रख्यापयामास। परं महात्मा महावीरः पुनर्द्वादशवर्षावधि तपस्यां विधाय तपसो बहुफलं तत्प्रभावञ्चानुभूय तपसि तदीयानशेषानप्यनुयायिनः अपि च सामान्यान् सर्वाञ्जनाञ्च प्रेरयामास इत्यस्त्ययं महान्विशेषो बौद्धजैनदर्शनयोः। किञ्च तद्विरुद्धं बौद्धमते न केवलं परमात्मनोऽस्तित्वमनावश्यकं किन्त्वा-त्मनोऽपि सत्त्वमस्ति वा नवेति न संशयापन्नोऽयमेव विषयः तत्राप्यनेका भिन्नमतयश्च। जैनमते पुनर्न केवलं जीवास्तित्वं प्रमाणितं किन्तु जले अपि च वृक्षादिस्थावरवस्तुषु अपि तद्विधीयते इति सर्वं स्पष्टमिह।

## सन्दर्भाः

---

1 उमास्वामिकृततत्त्वार्थसूत्रम् – 5.21 पृ.सं -56

2 प्रो.महावीर-सरणजैन-कृत''भगवान्महावीरएवंजैनदर्शनम्'' -पृ-सं-221-263

---

[3] (अ) ''कोहंचमाणंचतहेवमायंलोभंचउत्थंचअज्झत्थदोसा'' (1-6-26)
पञ्चमगणधरसुधर्मास्वामिकृतसूत्रकृताङ्गसूत्रम्पृ.सं-49
(आ) ''अहिंसापरमोधर्मः''महावीर-सरणजैन-कृत-भगवान्महावीरएवंजैनदर्शनम्पृ-सं- 221-263

[4] **"**अनेकेअन्ताधर्मायत्रसोऽनेकान्तवादः'' सिद्धसेनकृतसन्मतितर्कः, पृ.सं-64

[5] ''नत्थिएरिसोपासोपडिबन्धोअत्थिसव्वजीवानांसव्वलोए'' हेमचन्द्रकृतप्रश्नव्याकरणसूत्रम्**(1-5)**

[6] भगवान्महावीर एवम् जैनदर्शनम् - पृ.सं - 41-47

[7] श्री.पं.कैलाशचन्द्रजीकृजैनधर्मः - पृ.सं. 217-266

[8] ''आसव बंधणसंवर-निज्जरमोक्खा-सपुण्णपावा जे ।
जीवाजीव-विसेसा, तेवि समासेण पभमाणो।। पृ.सं-28।।
नेमिचन्द्रकृतद्रव्यसंग्रहस्य सप्ततत्त्वाधिकारः पृ.सं 42

[9] हीरालालजैनकृत ''भारतीयसंस्कृति में जैनधर्म का योगदान'' पृ.सं- 49-210

[10] अज्जीवो पुण णेओ, पुग्गल धम्मो अधम्म आयासम् ।
कालो पुग्गल मुत्तो, रूवादिगुणो अमुत्ति सेसादु ।। श्लो.सं -17
द्रव्यसङ्ग्रहस्याजीवादिद्रव्यवर्णनम् पृ.सं-17
आकाश-काल-पुद्गल धर्मोधर्मेषु न सन्ति जीवगुणाः ।
तेषामचेनत्वं भणितं जीवस्य चेतनता ।। श्लो.सं – 55 जैनदर्शनम् – पृ.सं – 153

[11] मिच्छा सासन मिस्रो, अविरै देसव्रत सुध सम्मिधं ।
प्रमत्त अप्रमत्त भनियं अपूर्वकरन सुध ससुधं।। श्लो.सं - 658
अनिवर्त सूक्ष्मवन्तो, उवसंत कषाय षीन सुसमिधो ।
सजोग केवलिनो, अजोग केवली हुंति चैदसमो ।। श्लो.सं - 659 न्यायसमुच्चयसारः पृ.सं -11

[12] द्रव्यसङ्ग्रहस्य सप्ततत्त्वाधिकारे पृ.सं- 28

[13] जातिगोत्रादिकर्माणि शुक्लध्यानस्य हेतवः।
येषु ते स्युस्त्रियो वर्णाः शेषाः शूद्राः प्रकीर्तिताः।।(74) उत्तरपुराणम् पृ.सं–46

[14] जैन आगम इतिहास एवम् संस्कृति, पृ.सं. 1-16

[15] Indian Antiquary, Vol. 21, p. 27

## उपयुक्तग्रन्थसूची

1. पुष्पदन्त-भूतबलि-कृतषट्खण्डागमः
श्रीविश्वक्सेनाचार्यविरचित-धवला-टीका-समन्वितः
हीरालालविदुषासम्पादितः, प्र.भागः
जैनसाहित्योद्धारकफंद कार्यालय, अमरावती, बरार - 1947

2. कुन्दकुन्दाचार्यविरचित-नियमसारः
ब्रह्मचारीशीतलप्रसादजीकृत-हिन्दीव्याख्यासमेतः
द्वितीयभागः, दिल्ली,वीरनिर्वाण.सं- 2498

3. हीरालालजैनकृत-भारतीयसंस्कृति में जैनधर्म का योगदान''
प्रकाशन- मध्यप्रदेश-शासन-साहित्य-परिषद्
प्रथमसंस्करणम्, मध्यप्रदेश – 1962

4. प्रो.महावीर-सरणजैन-कृत-भगवान् महावीर एवं जैनदर्शनम्
प्रकाशनम्- लोकभारतीप्रकाशन इलाहाबाद
प्रथमसंस्करण, प्रयागराज- 2015

5. आचार्य-उमास्वामिकृत-तत्त्वार्थसूत्रम्
पं.सुखलालसंघविकृतव्याख्योपेतम् ,द्वितीयसंस्करणम्,
प्रकाशनम्, पार्श्वनाथ-विद्यापीठ, वाराणसी - 1973

6. श्री.पं.कैलाशचन्द्रजीकृतजैनधर्मः
प्रकाशनम्-जीवराज जैनग्रन्थमाला, सोलापूर
प्र.संस्करणम्, सोलपूर, वि.संवत्सर-2020

7. श्रीजिनतारणस्वामिकृतन्यायस्मुच्चयसारः
प्रकाशनम्-श्रीविजयलावण्यसूरिश्वरज्ञानमन्दिरम्
प्र.संस्करणम्,सौराष्ट्र, वि.संवत्सर-2013

8. श्रीभद्राचार्यकृत-उत्तरपुराणम्
श्रीपन्नालालकृत-हिन्दीव्याख्यासमेतम्
प्रकाशनम्- भारतीय ज्ञानपीठप्रकाशन
प्र.संस्करणम्, सौराष्ट्र-1993

9. रेखाचतुर्वेदीकृत-जैनागम इतिहास एवं संस्कृति
प्रकाशनम्, अनामिका पब्लीशर्स एन्ड डिस्ट्रीब्यूटर्स
प्र.संस्करणम्, नई दिल्ली- 2000

10. पञ्चमगणधरसुधर्मास्वामिकृतसूत्रकृताङ्गसूत्रम्
सम्पादक-अनुवादक-विवेचक,श्रीचन्दसुराना 'सरस'

प्रकाशनम्- श्रीआगम-प्रकाशन-समिति, ब्यावर
प्र.संस्करणम्, राजस्थान, 1982

11. सिद्धसेनकृतसन्मतितर्कप्रकरणम्
अभयदेवसुरिनिर्मित-तत्त्वबोधविधायिनीव्याख्यासमेतम्
पं.सुखलाल-वेचरदासाभ्यां संपादितम्, प्र.संस्करणम्
प्रकाशनम्- गुजरात-विद्यापीठम् – 1987

12. हेमचन्द्रकृतप्रश्नव्याकरणसूत्रम्
वासीलालजी-महराजकृत-सुदर्शिनीव्याख्यासमेतम्
प्रकाशकः श्रेष्ठि-श्रीशान्तिलालमहोदयः, प्र. संस्करणम् , राजकोट– 1962

13. The Indian antiquary, A journal of oriental research, Published between 1872 and 1933, Founded by the archaeologist James burgess

# चार्वाकनये प्रमाणखण्डनमण्डनविमर्शः
# CĀRVĀKANAYEPRAMĀṆAKHAṆḌANAMAṆḌA-NAVIMARSAḤ

**Dr. Swapan Mal and Arpita Nath**

**Abstract**

The position of Cārvāka philosophy is the very important in Indian philosophical school. The word Cārvāka is derived from the root Carv. Cārvākas believe in existence of materialistic world. They also don't believe in past and future world. In mythological sense, Devaguru Bṛhaspati is the founder of Cārvāka system. The Cārvāka philosophy, otherwise known as Lokāyata philosophy, is popular among the general people for the rejection of past and future. The primary reason behind popularity is the acceptance of *pratyakṣa*as the only *pramāṇa*. The Cārvāka rejects theories of Ātmatattva, Paralokavāda, Janmāntaravāda, and the existence of Īśvara. The paper makes an analytical review of how the Cārvākas reject the anumāna, upamāna and śabda establish only pratyakṣa as the proper source of knowledge.

**Key-words :** Darśana, Pramāṇa, Pratyakṣa, Anumāna, Vyāpti, Upādhi, Upamāna, śabda.

**उपोद्घातः**

भारतीयकृष्टेः सृष्टेर्धात्री वाहिका च संस्कृतभाषा। संस्कृतवाङ्मये सर्वजातीया विद्या परमश्रद्धासहकारेण सृष्टिलग्नादालोचिता स्यात्। सत्यस्य सत्यमुद्भावनायाः कारणात् सर्वविद्यायाः समुद्भवम्। इयं विद्या द्विविधा। यथा– परापरा च। पराविद्या भवति ब्रह्मप्रतिपादका विद्या। एवञ्च तद्भिन्ना तदुपकारिका विद्या अपराविद्या नाम्नाऽभिहिता। तन्मतं यथायथरूपेण मुण्डकोपनिषदि प्रतिफलितमस्ति। तद्यथा– द्वे

विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च। तत्रापरा – ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा– यया तदक्षरमधिगम्यते।[1] अपराविद्यया पराविद्यामाध्यमेन सत्यस्वरूपे परमवस्तुन्युन्नीतं स्यात्– एतद् हि दर्शनशास्त्रस्योद्देश्यम्। तस्मात् कारणात् दर्शनशब्दस्य स्वरूपप्रसङ्गेन विविधमतानामुल्लिखिते सति तन्मध्ये ऐक्यस्य मूलं बीजरूपेण निहितम्। शास्त्रपरम्परायां श्रुयते– दृश्यते साक्षात्क्रियते परमात्मा-दिसंज्ञासंज्ञितः परमपुरुषः येन तद्दर्शनम्।[2] अन्यत्राप्युच्यते– दृश्यते ज्ञायते विचार्यते अनेन इति दर्शनम्।[3] दृश्यते अनेन इत्यस्मिन् विग्रहवाक्ये प्रेक्षणार्थकस्य दृशिरिति धातुना साकं करणाधिकरणयोश्चेति[4] सूत्रेण ल्युट्प्रत्यययोगेन दर्शनशब्दस्य व्युत्पत्तिः। रुढ्यर्थस्य स्वीकरणे दर्शनमिति शब्दस्यार्थः दर्शनशास्त्रम्। अर्थात् सत्यस्वरूपनि-रूपणशास्त्रमिति। अनेन प्रकारेण भारतीयसभ्यतायां शास्त्रे संस्कृतौ च दर्शनशास्त्रं विचारार्थकशास्त्ररूपेण गृहीते सति सत्यस्वरूपनियामकशास्त्रं भविते सति च चिन्तनभेदेन मननवैचित्र्येण च भारतीयदर्शनमास्तिकनास्तिकभेदेन द्विधाविभक्तं जातम्। आस्तिकनास्तिकार्थप्रसङ्गेन पाणिनीयसूत्रे दरीदृश्यते यत्– अस्तिनास्तिदिष्टं मतिः।[5] अर्थात् अस्तीति मतिर्यस्य स आस्तिकः नास्तीति मतिर्यस्य सः नास्तिकः। श्रीमता भट्टोजीदीक्षितेनापि कथितम्– अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः, नास्तीति मतिर्यस्य सः नास्तिकः।[6] परन्तु भारतीयदर्शनस्य विभाजनपरम्पराया-मेतन्मतं न गृहीतं स्यात्। तस्मात् कारणात् महामतिना मनुना कथितं तत्सम्पर्कितं मतं सर्वजनमनोऽभिराममिति। तेनोक्त आस्तिकनास्तिकस्वरूपविषयकश्लोकोऽयं यथा–

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।
स साधुभिर्वहिष्कार्यो नास्तिको वेदनिन्दकः।।[7]

अर्थादनेन श्लोकेनेदं प्रतीयमानं भवति यत् वेदानां प्रामाण्ये विश्वासिनः भवन्त्यास्तिकाः वेदानां प्रामाण्येऽविश्वासिनः भवन्ति नास्तिकाः। नास्तिकदर्शनं मूलतया त्रिविधम्। यथा– चार्वाकाः बौद्धाः जैनाश्च। अपरे ये भवन्तास्तिकदर्शनं ते भवन्ति मूलतया षड्-विधम्। तद्यथा– सांख्य-योग-न्याय-वैशेषिक-मीमांसा-वेदान्तश्च। नास्तिकदर्शनेषु चार्वाकाः शिरोमणिरूपेण परिचिताः। देवगुरुणा बृहस्पतिना रचितमिदं दर्शनं लोकायतिकः नाम्नाऽपि प्रसिद्धोऽस्ति। चार्वाकदर्शनस्य बार्हस्पत्यसूत्रग्रन्थस्य प्रणेता भवति बृहस्पतिः।कथितमस्ति चार्वाक आसीत् बृहस्पतिशिष्यः। चारुः रमणीया वाक् उक्तिः यस्य सः चार्वाकः। तेन प्रचारितं दर्शनमिदं चार्वाकदर्शनम्। चार्वाकदर्शनस्य वचनानां श्रवणकाले लोकानां श्रोतृणाञ्च मनोरञ्जनं रमणीयतेति च समुद्भवात् लोकायतिकेति नामकरणम्। भूमिवार्यनला-निलेति भूतद्रव्यानां संयोगेनास्य विश्वस्योत्पत्तिर्भवतीति मतवादस्य समर्थकत्वात्

दर्शनमिदं जडवादिरूपेणापि प्रसिद्धम्। महादार्शनिकः डः सर्वपल्लीराधाकृष्णन् महोदयः घोषितवान्– Materialism is as old as philosophy, and the theory is to be met within pre-Buddhistic period also. Germs of it are found in the hymns of the Ṛg-Veda, "Several vestiges show that even in the pre-Buddhistic India proclaimers of purely materialistic doctrines appeared; and there is no doubt that those doctrines had ever afterwards, as they have today, numerous secret followers.'' In the early Buddhistic scriptures there are references to this doctrine.[8] पुराणसाहित्ये महाभारतेवनपर्वणि शान्तिपर्वणि रामायणे अयोध्याकाण्डे मनुस्मृतो तृतीयाध्याये कौटिल्यस्यार्थशास्त्रे शङ्कराचार्यस्य शारीरकभाष्ये बृहस्पतिसंहितायाः भट्टोत्पलस्य टीकायां वात्सायनाचार्यस्य कामसूत्रे तथा च प्रायशः सर्वेषु दर्शनशास्त्रेषु चार्वाकदर्शनस्यास्योल्लिखितमस्ति। चार्वाकदर्शनस्य कोऽपि मूलग्रन्थः न प्राप्यते। विविधदर्शनशास्त्रेषु प्राप्तानि चार्वाकतत्त्वानि संगृह्य दर्शनस्यास्य दार्शनिकमतवादं समुपलभ्यते।प्रत्येकं दर्शनं यथार्थज्ञानानुसन्धानं करोति। एवञ्च प्रतिदर्शनस्य यदालोच्यविषयो भवति तत्तु प्रमेयमिति नाम्नाऽभिहितम्। ईदृशं ज्ञानमपि– सर्वव्यवहारहेतुर्गुणः[9] स्यात्। ज्ञानमपि द्विविधम्। यथा – स्मृतिरनुभवश्च। स्मृतिः संस्कारमात्रजन्यं ज्ञानम्[10]। अनुभवस्तु द्विविधः यथार्थायथार्थभेदेन। यथार्थानुभवः प्रमेत्युच्यते। प्रमाकरणं प्रमाणम्।[11] भारतीयवाङ्मये प्रमाणमष्टविधम्। यथा –

चार्वाकास्तावदेकं द्वितयमपि पुनर्बौद्धवैशेषिकौ द्वौ।
भासर्वज्ञश्च सांख्यस्त्रितयमुदयनाद्याश्चतुष्कं वदन्ति।।
प्राहुः प्राभाकराः पञ्चकमपि च वयं तेऽपि वेदान्तविज्ञाः।
षट्कं पौराणिकास्त्वष्टकमभिदधिरे सम्भवैतिह्ययोगात्।।[12]

अर्थात् संक्षेपेण सारण्याकारेण वक्तुं शक्यते –

| **सम्प्रदायः** | **स्वीकृतप्रमाणम् + संख्या** |
|---|---|
| 1. चार्वाकः - | प्रत्यक्षम् =1 |
| 2. बौद्धः+वैशेषिकः - | प्रत्यक्षम्, अनुमानम्=2 |
| 3. भासर्वज्ञः+सांख्यः+योगः - | प्रत्यक्षम्, अनुमानम्, शब्दः=3 |
| 4. न्यायः - | प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः=4 |
| 5. प्राभाकरमीमांसा - | प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, अर्थापत्तिः=5 |
| 6. भाट्टमीमांसा+वेदान्तः - | प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, अर्थापत्तिः, अनुपलब्धिः=6 |

7. पौराणिकः - प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः, अर्थापत्तिः, अनुपलब्धिः, सम्भवम्, ऐतिह्यम्=8

एषु प्रमाणाष्टकेषु सांख्यसूत्रे सांख्यकारिकायां तत्त्वकौमुदीटीकायाञ्च तथा सांख्य-योगदर्शने प्रत्यक्षमनुमानं शब्द इति प्रमाणत्रयं प्रसिद्धम्। सांख्यकारिकायामुक्तम्–

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि।।[13]

एतेषु प्रमाणेषु सर्वप्रमाणानि सिद्धानि भवन्ति।[14] चार्वाकदर्शने प्रमाणतत्त्वस्य मूलबीजं निहितमस्त्यत्र कारिकायाम्-

यावज्जीवंसुखंजीवेत् नास्तिमृत्योरगोचरः।
भस्मीभूतस्यदेहस्यपुनरागमनंकुतः।।[15]

अनया रीत्या चार्वाकदर्शने प्रत्यक्षप्रमाणं स्वीकृतमनुमानप्रमाणं शब्दप्रमाणञ्च अस्वीकृतम्। लोकायतिकपक्षप्रकरणे कथितमस्ति-

प्रत्यक्षगम्यमेवास्ति नास्त्यदृष्टमदृष्टतः।
अदृष्टवादिभिश्चापि नादृष्टं दृष्टमुच्यते।।[16]

तस्मात्तेषां मते तु – प्रत्यक्षमेव प्रमाणम्।[17] अतः प्रत्यक्षप्रमाणस्य स्वीकरणे अनुमानशब्दप्रमाणास्वीकरणे चार्वाकानां युक्तिसौष्ठवं प्रदर्शनं कर्तव्यमिति। तस्मात् कारणात् प्रत्यक्षादनन्तरं यस्मादनुमानं शब्दप्रमाणं पठितं स्यात्तर्हि सर्वादौ अनुमानप्रमाणखण्डनं तदनन्तरं शब्दप्रमाणखण्डनपूर्वकं प्रत्यक्षप्रमाणमण्डनं भवितव्यं चार्वाकमतानुसारेण।

**अनुमानप्रमाणखण्डनम्**

चार्वाकदर्शनभिन्नदर्शनशास्त्रपरम्परायामात्मा पृथक्तत्त्वरूपेण स्वीकृतम्। किन्तु चार्वाकनये आत्मा पृथक्तत्त्वरूपेण न स्वीकृतम्। आत्मा पुरुषरूपेणापि प्रतिज्ञातं सांख्यादिनये। तत्र चार्वाकदर्शने उच्यते– चैतन्यविशिष्टः कायः पुरुषः।[18] अर्थात् आत्मार्थे देह एव स्वीकृतः। तत्रोच्यते–

अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते।
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।।[19]

यथा किण्वादिफलानां संमिश्रणेनैव मदशक्तिर्जायते तथा मृत्तिका जलं वह्निः वायु इति चतुर्भूतसंयोगेनापि चैतन्यं जातमिति। यस्मात् अहं स्थूलः, अहं कृशः इत्यादौ अहकारत्वं स्थूलत्वं कृशत्वञ्च समानाधिकरण्येनशरीरे तिष्ठति। तस्मादुच्यते– तच्चैतन्य-विशिष्टदेह एवात्मा।[20] देहातिरिक्तात्मनः पृथगास्तित्वास्वीकारस्य पश्चात् चार्वाकाणां सर्वोत्तमं युक्तिनिष्ठं मतं भवति यत् चार्वाकदर्शनभिन्नप्रस्थाने देहातिरिक्तमात्मा नामकं यत् पृथक्तत्त्वमस्ति तद्विषये नास्ति किमपि प्रमाणम्। चार्वाकनये उक्तमस्ति यत्– देहातिरिक्तात्मनि प्रमाणाभावात्।[21] अधुना उदितं भवति यत् गुरुत्वपूर्णविषयकं तत्त्वं तद्भवति– प्रसिद्धं प्रमाणमष्टविधम्। तेष्वष्टविधेषु प्रमाणेषु सर्वप्रसिद्धं प्रमाणं त्रिविधं यदुक्तमितःपूर्वमेव। तत् प्रमाणं भवति– प्रत्यक्षमनुमानं शब्दश्चेति। एतेषु त्रिविधेष्वष्ट-विधेषु वा प्रमाणेषु नास्ति किञ्चिदपि प्रमाणं येनात्मनः पृथगस्तित्वं प्रमाणितं स्यात्। अस्मात् कारणात् चार्वाकाः आत्मनः पृथगस्तित्वं न स्वीकृतवन्तः। तेन हेतुना चार्वाकाः यथायथरूपेणोद्धृतवन्तः– स्यादेष मनोरथो यद्यनुमानादेः प्रामाण्यं न स्यात्।[22] अर्थात् तेषां मते आत्मनः पृथगस्तित्वं स्वीकृतं न स्यात् तदा यदा अनुमानादेर्प्रामाण्यं न स्यात्। तद्धेतौ चार्वाकाः अथ देहातिरिक्तात्मनः पृथगस्तित्वस्यास्वीकरणाय सर्वादौ अनुमाना-देर्प्रामाण्यतां खण्डनार्थं स्वयमेव पूर्वपक्षीयानां मतं समुत्थायानुकूलतर्केनतन्मतमु-पस्थापितवन्तः। अर्थात् चार्वाकविरोधिनोऽनुमानं प्रमाणरूपेण स्वीकुर्वन्ति, एतादृशं सिद्धान्तं पूर्वपक्षीरूपेणोपस्थापितवान्– अस्ति च प्रामाण्यम्।[23] यद्यनुमानप्रमाणस्य प्रामाण्यं न स्यात्तर्हि कथं धूमस्य ज्ञानादनन्तरं धूमध्वजे प्रेक्षावतः व्यक्तेर्प्रवृत्तिरुत्पद्यते। तथा च नदीतीरे फलमस्तीति वाक्यश्रवणानन्तरं फलाकाङ्खिनां नदीतटे प्रवृत्तिर्जा-यते। शास्त्रे उच्यते– कथमन्यथा धूमोपलम्भानन्तरं धूमध्वजे प्रेक्षावतां प्रवृत्तिरुप-पद्यते। नद्यास्तीरे फलानि सन्तीति वचनश्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति।[24] चार्वाकाः एवंप्रकारेण पूर्वपक्षीरूपेणानुमानं स्थिरीकृत्य तदनुमान-प्रमाणखण्डने प्रवृत्ताऽभवन्। शास्त्रे प्रसिद्धिरस्ति यत्– अनुमितिस्तु यथार्थज्ञानम्। तत्करणमनुमानञ्च। न्यायदर्शने दृश्यते– यथार्थज्ञानमनुमितिः। अनुमितिकरणमनु-मानम्। परामर्शजन्यं ज्ञानमनुमितिः।[25] अर्थात् स्पष्टतया प्रतीयते यत् परामर्शजन्यं तथा परामर्शादुत्पन्नं ज्ञानमनुमितिः स्यात्। पुनः प्रश्नः जायते- को नाम परामर्शः? उत्तररूपेण शास्त्रे दृश्यते- व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः।[26] अयं परामर्शः नामकः विषयोऽनुमितौ अतीव गुरुत्वपूर्णम्। तस्मात् कारणात् परामर्श एवानुमितिं प्रति करणमनुमानं प्रमाणं वा भवति। यथा– वह्निव्याप्य धूमवान्नयं पर्वतः। तज्जन्यं पर्वतो वह्निमान् इति ज्ञानमनुमितिः।[27] अर्थात् पर्वतरूपपक्षे धूमरूपं हेतुं दृष्ट्वा वह्निरूपस्य साध्यस्यानुमानस्थले वह्निधूमयोर्व्याप्तिसम्बन्धस्य ज्ञानं स्थापितं स्यात्। तदा व्याप्तिविशिष्टपक्षधर्मताज्ञानमुत्पद्यते। यस्य ज्ञानस्यापरं नाम खलु तृतीयलिङ्ग-

परामर्शः। इदं तृतीयलिङ्गपरामर्शज्ञानमनुमानप्रक्रियायामुपनयरूपावयववाक्यरूपेणाङ्गीकृतं स्यादिति। लिङ्गमिति शब्दस्यार्थो भवति लीनं गच्छतीति लयं गच्छतीति वा लिङ्गम्। अर्थात् लिङ्गशब्दस्यार्थो हेतुः साधनं वा। हेतुना साधनेन वा साध्यस्यानुमितिर्भवति। तस्मात् कारणादनुमानप्रमाणवादिनः प्रवदन्ति यत् व्याप्तिविशिष्टपक्षधर्मताज्ञानं खलु अनुमानपदवाच्यम्। किन्तु अस्मिन् प्रसङ्गे चार्वाकाः घोषयन्ति यत् व्याप्तिविशिष्टपक्षधर्मता- ज्ञानं तथा परामर्श अनुमितौ मनोराज्यस्य कल्पनामात्रम्। अर्थात् येऽनुमानप्रमाणवादिनः वदन्ति अनुमितौ व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शो वा मूलम्। चार्वाकानां मते तु अनुमानप्रमाणवादिनामेतादृशी भावना सम्पूर्णतया मानसिककल्पना। एतादृशं कल्पनं प्रकृत्या मृषावचनम्। चार्वाकैरुक्तम् – तदेतन्मनोराज्यविजृम्भणं व्याप्तिपक्षधर्मताशालि हि लिङ्गं गमकमभ्युपगतमनुमानप्रामाण्यवादिभिः।[28] अनुमानप्रामाण्यवादिनः प्रवदन्ति यत् परामर्शायानुमानाय वा व्याप्तिज्ञानमावश्यकम्। तर्हि सम्प्रति प्रश्नः जायते– का नाम व्याप्तिः? तदुत्तरे न्यायशास्त्रे उक्तम्–

> व्याप्तिस्तु साध्याभाववदवृत्तित्वं प्रकीर्तितम्।
> व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः।।
> अथवा हेतुमन्निष्ठविरहाप्रतियोगिना।
> साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते।।[29]

अन्यत्राप्यतीव सरलतया संक्षेपेण सम्यग्रूपेण व्याप्तेर्लक्षणं प्रदत्तम् – यत्र यत्र धूमस्तत्राग्निरिति साहचर्यनियमो व्याप्तिः।[30] तत्र प्रसिद्धटीकायां दृश्यते– हेतुसमानाधिकरणात्यन्ताभावा- प्रतियोगिसाध्यसमानाधिकरण्यं व्याप्तिः।[31] अतः व्याप्तिरेकप्रकारकभूतः हेतुसाध्ययोः नियतसाहचर्यसम्बन्धविशेषः। परन्तु चार्वाकदर्शने व्याप्तेर्लक्षणप्रसङ्गे कथितमस्ति– व्याप्तिश्चोभयविधोपाधिविधुरः सम्बन्धः।[32] विधुर इति शब्दस्यार्थः शून्यमभावो विहीनं वा। अर्थात् उभयविधोपाधिविहीनं सम्बन्धविशेषः व्याप्तिः। सुतरां चक्षुरादिवत् तथा प्रत्यक्षवन्न सम्बन्धोऽयम्। अयं सम्बन्धः केवलं ज्ञाततया स्वीकृतः। एतादृशस्य व्याप्तिज्ञानस्योपायः कः? चार्वाकाः प्रोक्तवन्तः यत् प्रत्यक्षप्रमाणेन व्याप्तिज्ञानं कदापि न भवितुमर्हति। कारणं प्रत्यक्षं द्विविधम्– वाह्यप्रत्यक्षमाभ्यन्तरप्रत्यक्षञ्च। वाह्यप्रत्यक्षेण व्याप्तिज्ञानं नार्हति। यस्मात् अतीतानागतादिविषयाणामनुपस्थिते सति चक्षुरादिवाह्येन्द्रियेण तद्विषयाणां सन्निकर्षाभावात् वाह्यप्रत्यक्षं न स्यात्। व्याप्तिज्ञानमाभ्यन्तरप्रत्यक्षेणापि न सम्भवम्। यस्मात् चक्षुरादिभ्यो वाह्येन्द्रियेभ्यः मनः परतन्त्रम्। प्रत्यक्षस्थले मनो वाह्येन्द्रियाणामुपर्यधीनं स्यात्। अतः यदि वाह्यप्रत्यक्षं न स्यात्तर्हि कुतो आभ्यन्तरप्रत्यक्षम्? तस्मात् कारणात्

व्याप्तिज्ञानं प्रत्यक्षप्रमाणेन कदापि नोत्पन्नं भवतीति।अनुमानप्रमाणेनापि व्याप्तिज्ञानं न जायते। यस्मात् कारणात् व्याप्तिज्ञानार्थं यद्यनुमानप्रमाणं स्वीकृतं स्यात्तर्हि तदनुमान-प्रमाणायापरमेकं व्याप्तिज्ञानमावश्यकम्। एवं प्रकारेण तद्प्रकारकं व्याप्तिज्ञानस्य स्वीकरणार्थमपरमेकं व्याप्तिज्ञानं स्वीकर्तव्यम्। अनेन प्रकारेण एकस्य स्वीकरणार्थमनेके स्वीकृते सति शास्त्रसम्मत अनवस्थादोषप्रसङ्गः जायते। अर्थात् व्याप्तिज्ञानेन अनुमानप्रमाणं न स्यात्।

व्याप्तिज्ञानं शब्दप्रमाणेनापि न जायते। यतो वैशेषिकाचार्यः कणादमुनिः युक्त्या प्रतिष्ठितवान् यत् शब्दप्रमाणमनुमानप्रमाणस्यान्तर्गतमिति। पुनश्च शब्दप्रमाणं यदि अनुमानप्रमाणस्यान्तर्गतं न स्यात् अर्थात् शब्दप्रमाणमनुमानप्रमाणात् पृथक्प्रमाण-रूपेण स्वीकृते सति तत्राप्यनवस्थादोषप्रसङ्गः दृश्यते। उच्यते– शाब्दज्ञानं भवति शक्तिग्रहेण। शक्तिग्रहस्योपायाः विविधाः। यथोक्तं न्यायशास्त्रे–

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।[33]

सुतरां शक्तिग्रहस्योपायेषु वृद्धव्यवहारः प्रसिद्धः। अर्थात् वृद्धव्यवहारनामकेन शक्तिग्रहोपायेन शाब्दज्ञानं भवति। वृद्धव्यवहारनामकस्य शक्तिग्रहस्योदाहरणं यथा– शक्तिग्रहस्तु वृद्धव्यवहारेण। तथा हि व्युत्पित्सुर्वालो गामानयेत्युत्तमवृद्धवाक्यश्र-वणानन्तरं मध्यमवृद्धस्य प्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य अश्वमानय गां वधानेति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्ति अश्वशब्दस्याश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते।[34] अर्थादत्र स्पष्टतया प्रतीयते गामानय गां बधान अश्वमानय अश्वं बधान– एतादृशानां बहुविधवाक्यानां श्रवणाद-नन्तरं ग्रहणवर्जनन्यायेन व्युत्पित्सुर्वालानां ज्ञानमुत्पद्यते। किन्तु शास्त्रीयवचनानु-सारेणोच्यते एकस्य स्वीकारेऽनेकग्रहणमनवस्थादोषस्य प्रसङ्ग उत्थितः। शब्दप्रमाण-स्थलेऽनवस्थादोषस्थिते सति व्याप्तिज्ञाने शब्दप्रमाणरूपोपायः न स्वीकृत इति चार्वाकानां मतम्। सर्वदर्शनसंग्रहे कथितमस्ति– कणादमतानुसारेणानुमानम् एवान्त-र्भावात्। अनन्तर्भावे वा वृद्धव्यवहाररूपलिङ्गावगतिसापेक्षतया प्रागुक्तदूषणलङ्घना-जङ्घालत्वात्।[35] धूम-धूमध्वजयोर्मध्येऽविनाभावो व्याप्तिसम्बन्धः विद्यमानः– वचन-मिदं केवलं मन्वादिकथितशास्त्रवचनवत् विश्वासयोग्यम्। किन्तु न प्रकृततया सत्यवचनमिदम्। अतः यत्राविनाभावो व्याप्तिज्ञानं वा नास्ति तत्र स्वार्थानुमानपरार्था-नुमानं कथं स्वीकार्यम्। तत्र प्रतिफलितमस्ति– अनुपदिष्टाविनाभावस्य पुरुषस्यार्थान्त-रदर्शनेनार्थान्तरानुमित्यभावे स्वार्थानुमानकथायाः कथाशेषत्वप्रसङ्गाच्च। कैव कथा परार्थानुमानस्य।[36]

उपमानप्रमाणेनापि व्याप्तिग्रहः व्याप्तिज्ञानं वा न सम्भवति। न्यायनये दृश्यते– उपमितिकरणमुपमानम्। संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। तत्करणं सादृश्यज्ञानम्।[37] अर्थात् उपमितिः प्रमा। तत्करणमुपमानं प्रमाणम्। संज्ञासंज्ञिसम्बन्धज्ञान-मप्युपमितिपदवाच्यम्। एवञ्च सादृश्यज्ञानमुपमितेर्करणं तथोपमानप्रमाणम्। यथा– गोसदृशो गवयः। अत्र गो संज्ञा गवयः संज्ञी– अनयोर्द्वयोर्सादृश्यज्ञानमुपमानम्। अस्मिन् सादृश्यज्ञाने उपाधेर्विद्यमानत्वे सति तदुपाधिरुपमितिरूपप्रमाज्ञानस्य बाधिका-रूपेणाभिहिता स्यात्। तथा चोपमानं प्रमाणरूपेण गृहीतं न स्यात्। यथा– धूमाग्नयो-र्व्याप्तिसम्बन्धे आर्द्रेन्धनसंयोगरूपा उपाधिः विद्यमाना। सुतरामनौपाधिकहेतु-साध्यसम्बन्धस्तु व्याप्तिसम्बन्धः। परन्तूपाधिविधुरव्याप्तिः कदापि न भवति। तद्वत् संज्ञासंज्ञिसम्बन्धेऽपि व्याप्तिः न स्वीकृता यतः तत्राप्युपाधिशून्यता नास्ति। यथा– अग्नौ आर्द्रेन्धनसंयोगः न कृते सति धूमस्योत्पन्नं न स्यात्। अतो व्याप्तिसम्बन्धे संज्ञासंज्ञिसम्बन्धे वोपाधेरभावः कदापि भवितुं नार्हति। तस्मादुपमानप्रमाणमपि व्याप्तिप्रतिष्ठायां प्रकृष्टप्रमाणरूपेण न गृहीतमिति। तस्मादुच्यते- उपमानादिकन्तु दुरापास्तं तेषां संज्ञासंज्ञिसम्बन्धादिबोधनवत्वेनानौपाधिकसम्बन्धबोधकत्वसम्भवात्। किञ्च उपाध्यभावोऽपि दुरवगमः।[38] अनेन प्रकारेणोपमानस्य प्रामाण्यं खण्डितमिति।

एतादृशीनामुपाधिनां प्रत्यक्षत्वस्य विधेर्नियमो वा स्थितत्वात् प्रत्यक्षस्याभावस्य प्रत्यक्षत्वादप्रत्यक्षस्याभावस्याप्रत्यक्षत्वार्थमनुमानादेरिवानवस्थादोषोऽप्युपमानप्रमाणे ऽस्ति। तर्ह्यधुना पुनः प्रश्न जायते – उपाधेर्लक्षणं किम्? तदुत्तरे चार्वाकाः प्रोक्तवन्तः– साध्यव्यापकत्वे सति साध्यसमव्याप्तिरिति तल्लक्षणं कक्षीकर्तव्यम्। तदुक्तम्– अव्याप्त-साधनो यः साध्यसमव्याप्तिरुच्यते स उपाधिरिति।[39] अर्थात् यत् साधनाव्यापकत्वे सति साध्यसमव्याप्तिः तदुपाधिरिति चार्वाकानां मतम्। एतादृशमुपाधेर्लक्षणं कृते सति दोषत्रयं तत्र दृष्टम्। यथा– सकर्तृकं घटत्वमश्रावता चेति। शब्दोऽनित्य उत्पन्नत्वात् इत्यस्मिन्ननुमाने उत्पन्नत्वं सद्धेतुः। तथापि यद्युपाधेर्लक्षणं साध्यव्यापकत्वमित्येवं स्यात् तर्हि अनित्यत्वव्यापकत्वात् सकर्तृकत्वमुपाधिः स्यात्। न च प्रागभावेऽनित्य-त्वसत्त्वेऽपि सकर्तृकत्वाभावान्न साध्यव्यापकत्वमिति वाच्यम्। सकर्तृकत्वस्य भावाव-च्छिन्नानित्यत्वव्यापकत्वात्। अतः साधनाव्यापकत्वमित्युक्तम्। सकर्तृकत्वं तु नोत्पन्न-स्याव्यापकम्।[40] यदि साधनाव्यापकत्वमिति पदमुपाधिलक्षणे प्रदेयं तर्हि पूर्वोक्तानुमाने घटत्वमुपाधिः भवति। तस्मात्तत्रोपाधिलक्षणे साध्यव्यापकत्वमिति पदं प्रयुक्तम्। घटत्वस्यानित्यत्वरूपसाध्यव्यापकत्वाभावात्। तत्राप्यश्रावणत्वमुपाधिः। यतोऽश्रावण-त्वमुत्पन्नत्वरूपसाधनस्याव्यापकं स्यात्। शब्दोत्पन्नत्वसत्त्वेऽप्यश्रावणत्वाभावात्।

अश्रावणत्वं नित्येष्वाकाशात्मादौ विद्यमानम्। तस्मात् तद्द्रव्यत्वावच्छिन्नानित्यत्वेन न समनियतत्वम्। तस्मादुच्यते-

अव्याप्तसाधनो यः साध्यसमव्याप्तिरुच्यते स उपाधिः।
शब्देऽनित्ये साध्ये सकर्तृकत्वं घटत्वमश्रावतां च।
व्यावर्तयितुमुपात्तान्यत्र क्रमतो विशेषणानि त्रीणि।
तस्मादिदमनवद्यं समासमेत्यादिनोक्तमाचार्यैश्च।।[41]

फलतयोपाधेर्निमित्तमिदं हेतुत्रयं स्वीकृते सति व्याप्तिज्ञानं वज्रप्रहारदोषेण लिप्तं स्यात्। विधिनिश्चयादनन्तरमेव निषेधस्य निश्चयः स्यात्। तद्वदुपाधिज्ञानादनन्तरमेव तदभावस्य व्याप्तिज्ञानं भवति। उपाधिज्ञानमपेक्षितं व्याप्तौ। तथा उपाधौ व्याप्तिज्ञानमपेक्षितम्। अतः परस्परमपेक्षित्वादनोन्याश्रयो दोषो जायते। चार्वाकसम्मतशास्त्रवचने दृश्यते– तत्र विध्यध्यवसायस्योपाधिज्ञाने जाते तदभावविशिष्ट-सम्बन्धरूपं व्याप्तिज्ञानं व्याप्तिज्ञानाधीनं चोपाधिज्ञानमिति परस्पराश्रयवज्रप्रहारदोषो वज्रलेपायते। तस्मादविनाभावस्य दुर्बोधतया नानुमानाद्यवकाशः।[42] तस्मादुच्यते– नानुमानं प्रमाणम्।[43] एवं प्रकारेण अनुमानप्रमाणखण्डनेन चार्वाकाः महत्वं प्रदर्शितवन्तः।

**शब्दप्रमाणखण्डनम्**

प्रमाणाष्टकेषु शब्दप्रमाणमन्यतममिति चार्वाकेतरदर्शनप्रमाणप्रस्थाने स्वीकृतम्। शब्दस्य लक्षणप्रसङ्गे न्यायनये कथितमस्ति– आप्तवाक्यं शब्दः। आप्तस्तु यथार्थवक्ता।[44] यः भ्रमः प्रमादः विप्रलिप्सा करणापाटवश्चेति दोषविवर्जितः स एवाप्तस्तथा यथार्थवक्ता। तेनोच्चारितं पदसमूहात्मकं वाक्यं शब्द इति। शाब्दबोधे शक्तिग्रहस्तु सहकारिकारणम्। भाषापरिच्छेदे मुक्तावलीटीकायां यदुक्तमस्मिन् विषये तदालोचितमनुमानप्रमाणप्रसङ्गे इतःपूर्वम्। तत्रोक्तमाप्तवाक्याद् शाब्दबोधः जायते। आप्तपदस्यार्थः भवति चतुष्टयदोषविवर्जितो वक्ता। अयं वक्ता लौकिकालौकिकभेदेन द्विविधः। लौकिकप्रवक्ता खल्विहसंसारे विद्यमानः सर्वपुरुषो वाल्मीकिव्यासादिवत्। अलौकिकाप्तवक्ता त्वीश्वरादिवत्। ईश्वरस्त्वलौकिकापौरुषेयः। तदीश्वरकथितं वाक्यमपौरुषेयं वाक्यमाप्तवाक्यञ्च। अपौरुषेयं वाक्यं वेद इति सर्वजनप्रसिद्धं वचनम्। शास्त्रे प्रतिफलितम् –

पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवद्।।
समाख्याध्यापकत्वेन वाक्यत्वं तु पराहतम्।
तत् कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता।।[45]

परन्तु चार्वाकाः प्रवदन्ति शब्दोऽपि न प्रमाणम्, यथार्थवक्तुरभावात्।[46] भारतीयपरम्परायां प्रसिद्धिर्विद्यते यत् वेदः स्वतःप्रामाण्यं तथाप्तशास्त्रमिति। वेदश्चतुर्विधः ऋक्-साम-यजुः-अथर्वभेदात्। प्रतिवेदे पुनरपि चतुर्विभागोऽस्ति। यथा – संहिता तथा मन्त्रो ब्राह्मणमारण्यकोपनिषद्भेदात्। ब्राह्मणांशः कर्मकाण्डान्तर्गतः। उच्यते भारतीयो वाङ्मये– विधायकं वाक्यं ब्राह्मणम्। कर्मचोदना ब्राह्मणानि।[47] अस्मिन् ब्राह्मणांशे वेदसम्मतयागादेरालोचना प्रतिफलिता। यागादिवैदिककर्मणां प्रतिफलित्वात् ब्राह्मणं कर्मकाण्डरूपेण प्रसिद्धम्। तद्वतदुपनिषद् ब्रह्मविद्येति प्रसिद्धा। विद्येति शब्दस्यार्थः ज्ञानम्। अर्थात् विशुद्धज्ञानात्मकालोचनोपनिषदंशे परिलक्षिता। तस्मात् कारणादुपनिषद् ज्ञानकाण्डरूपेण परिचिता। कर्मकाण्डे परिलक्ष्यते– वेदसम्म-तयागयज्ञादिकर्ममाध्यमेन स्वर्गरूपमुक्तिर्प्राप्तिर्भवतीति। ज्ञानकाण्डे दृश्यते– विशुद्ध-ज्ञानमार्गेण मोक्षप्राप्तिर्भवति। तस्मात् बहुवित्तस्य व्ययं कृत्वा शारीरिकप्रयासेन च यज्ञकर्ताऽग्निहोत्रादियज्ञं करोति पारलौकिकसुखलाभायेत्युच्यते कर्मकाण्डे तथा ब्राह्मणांशे। यथा– अग्निहोत्रं जुहुयात् स्वर्गकामः।[48] अन्यत्र तु ज्ञानकाणडे तथोपनिषदंशे उच्यते यत् न कर्मणा मोक्षः जायते। तस्मात्तत्रोक्तम्– कर्मणा पितृलोको विद्यया देवलोकः।[49] तथा चोक्तम् – विद्ययाऽमृतमश्नुते।[50] अस्मिन् प्रसङ्गे चार्वाकैरुक्तम्– ननु पारलौकिकसुखाभावे बहुवित्तव्ययशरीरायाससाध्ये अग्निहोत्रादौ विद्यावृद्धाः कथं प्रवर्त्तिष्यन्ते इति चेत् तदपि न प्रमाणकोटिं प्रवेशमीष्टे।[51] अर्थात् ज्ञानमार्गे रताः कथं बहुवित्तव्ययायाससाध्ये वैदिककर्मणि प्रवृत्ताः। सुतरां ज्ञानकाण्ड-कर्मकाण्डयोर्मध्ये विवादः जातः केवलं वेदवाक्यस्यानृतव्याघातपुनरुक्तदोषत्वात्। अत्रोच्यते– वेदः नाप्तशास्त्रम्। तत्रानृतं तथा मिथ्या, व्याघातं तथा विरोधिता एवञ्च पुनरुक्त्यादि दोषत्रयमस्ति। तैत्तिरीयसंहितां दर्भमुद्दिश्य कथितमस्ति- ओषधे त्रायस्वैनम्, क्षुरमुद्दिश्य कथितमस्ति- स्वधिते मैनं हिंसीः, पाषाणमुद्दिश्य कथितमस्ति- शृणोत ग्रावाणः। एतेष्वचेतनानां दर्भक्षुरपाषाणानां चेतनवत् संबोधनं श्रूयते। अतश्चानृता-र्थबोधकत्वादस्याप्रामाण्यम्।[52]तैतिरीयसंहितायामपि च दृश्यते- एक एव रुद्रो न द्वितीयाय तस्थे, अनन्तरमुच्यते- सहस्राणि सहश्रशो ये रुद्रा अधिभूम्याम् इत्यनयोर्मन्त्रयोर्मिथो विरुद्धार्थकत्वेन व्याघातादप्रामाण्यम्। तदनन्तरं तैत्तिरीय-संहितायां दृश्यते- आप उदन्तु इति मन्त्रयजमानस्य क्षौरकाले जलेन शिरसः क्लेदनं ब्रूते। अस्य मन्त्रस्य लोकप्रसिद्धार्थानुवादकत्वेन पुनरुक्तत्वादनधिगतार्थग-न्तृत्वाभावादप्रामाण्यम्।[53]अतः वेदवाक्यं नाप्तशास्त्रं तथा वेदवाक्यं शब्दप्रमाणरूपेण न गृहीतव्यमिति। तथा च शास्त्रमिदं केवलमुत्पन्नं बुद्धिपौरुषहीनानां जीविकाप्रयो-जनात्। चार्वाकनये उद्घोषितम्–अनृतव्याघातपुनरुक्तदोषैर्दूषिततया वैदिककर्मण्यैरेव धूर्तवकैः परस्परं कर्मकाण्डप्रामाण्यवादिभिर्ज्ञानकाण्डस्य ज्ञानकाण्डवादिभिः कर्म-

काण्डस्य च प्रतिक्षिप्तत्वेन त्रय्या धूर्तप्रलापमात्रत्वेनाग्निहोत्रादेर्जीविकामात्र-प्रयोजनत्वात्। ज्ञानकाण्डस्याप्रामाण्यं कर्मकाण्डवादिभिर्मीमांसकैरुक्तम्। तथा च द्वयोः कलहे तृतीयस्य लाभ इति न्यायेन चार्वाकाः कृत्स्नस्यापि वेदस्याप्रामाण्यमिच्छन्त इत्थं ब्रुवते- ऋग्यजुःसामरूपा वेदत्रयी धूर्तानां प्रलापमात्रम्। धूर्ता ह्यग्निहोत्रादिकर्म-प्रतिपादकं वेदं विरच्य तत्र श्रद्धाजडानां विश्वासमुत्पाद्य पारलौकिकसुखलोभेन संभवद्बहुवित्तव्ययेऽपि क्लेशसाध्येऽपि च यज्ञादौ लोकान्प्रवर्त्य तेभ्यः सकाशात्प्रचुरं द्रव्यं लब्ध्वा स्वजीविकां संपादयन्तीति।[54]तथा चाभाणकः–

अग्निहोत्रस्त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः।।[55]

वेदवाक्येऽनृतं तथा मृषाभाषणं विद्यते। यथा श्राद्धकाले मृतजनस्य कृते यद्वेदविहितकर्म क्रियते तन्मिथ्यामूलकं कर्मेति। सुयुक्त्या चार्वाकाः प्रवदन्ति–

मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।
निर्वाणस्य प्रदीपस्य स्नेहः संबर्धयेत् शिखाम्।।
गच्छतामिह जन्तूनां व्यर्थं पाथेयकल्पनम्।
गेहस्तत्कृतश्राद्धेन पथितृप्तिवारिता।।[56]

व्याघातदोषोऽपि वेदे दृश्यते यत् यथोक्तमितःपूर्वं ज्ञानकाण्ड-कर्मकाण्डयोर्विरोध-मध्ये। पुनश्च पुनरुक्तिदोषः तत्रापि प्रतिफलितः। यथा स्वर्गकल्पनायां वेदे कथितम्– अग्निहोत्रं जुहुयात् स्वर्गकामः।[57] अनन्तरमुच्यते– ज्योतिष्टोमेन स्वर्गकामो यजेत[58] इत्यादिवत्। ईश्वरोऽपि अलौकिकपुरुषरूपेण चार्वाकदर्शने न स्वीकृतः। तत्रोच्यते– लोकसिद्धो राजा परमेश्वरः।[59] ईस्वरस्यास्तित्वसम्बन्धे चार्वाकनये दृश्यते ईश्वरा-सिद्धेः। प्रमाणाभावान्न तत्सिद्धिः।[60] अतो वेदः न नित्यशास्त्रम्। सूत्रे प्रतिफलितम्- न नित्यत्वं वेदानां कार्यत्वश्रुतेः।[61] तस्मात् कारणात् चार्वाकनये शब्दः प्रमाणरूपेण न स्वीकृतः। तत्रोच्यते– अप्रमाणं शब्दः।[62] एवं प्रकारेण प्रत्यक्षप्रमाणवादिनः चार्वाकाः शब्दप्रमाणं खण्डितवन्तः।

**प्रत्यक्षप्रमाणमण्डनम्**

अनुमानोपमानशब्दप्रमाणखण्डनादनन्तरं लोकायतिकानां चार्वाकानां मतानुसारं प्रत्यक्षस्य प्रमाणस्य मण्डनमालोच्यते। चार्वाकदर्शनेषु देहात्मवादः भूतचतुष्टय-वादादिश्च स्वीकृतः। तत्र जन्मान्तरवाद-परलोकवाद-कार्य-कारणवाद-सर्वजनप्रसिद्धे-श्वरतत्त्वसम्बन्धीयमतवादः पाप-पुण्यमात्मनः पृथगस्तित्वञ्च खण्डितम्। एतादृशानां

महत्तत्त्वानां खण्डनं स्यात् केवलं प्रत्यक्षप्रमाणं प्रमाणरूपेण ग्राह्यत्वात्। चार्वाकनयेऽतीतानागतविषयाणां प्रत्यक्षयोग्यत्वस्य अभावत्वात्तदपि नाङ्गीकृतम्। तत्र चार्वाकनये वर्तमानकालिकविषयाणां केवलं प्रत्यक्षयोग्यत्वमस्तीत्यङ्गीकृतम्। प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात्...[63] इति नियमात् सर्वे दार्शनिकाः प्रत्यक्षं स्वीकुर्वन्ति। तस्मात् कारणात् चार्वाकदर्शने महावाक्यरूपेणोक्तमस्ति –

यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिवेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः।।[64]

प्रत्यक्षलक्षणं तत्र चार्वाकपरम्परायां सम्यग्रूपेण न दृश्यते। किन्त्वन्यत्र प्राप्यते– इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। तद्द्विविधं निर्विकल्पकं सविकल्पकञ्चेति।[65] अत्रेन्द्रियेन सहार्थस्य तथा विषयस्य सन्निकर्षात्तथा संयोगादिसम्बन्धात् प्रत्यक्षमुत्पद्यते। अनेन प्रत्यक्षप्रमाणेनाकाशात्मादिपदार्थानां प्रामाण्यं न स्यात्। तस्मात्तत्र आकाशात्मादिपदार्थानां पृथगस्तित्वं चार्वाकदर्शने नाङ्गीकृतम्। तद्धेतौ तेषां मते– प्रत्यक्षमेव प्रमाणम्।[66] अन्यत्राप्युच्यते –

प्रत्यक्षगम्यमेवास्ति नास्त्यदृष्टमदृष्टतः।
अदृष्टवादिभिश्चापि नादृष्टं दृष्टमुच्यते।।
क्वापि दृष्टमदृष्टञ्चेददृष्टं ब्रुवते कथम्।
नित्यदृष्टं कथं सत् स्यात् शशशृङ्गादिभिः समम्।।[67]

आचार्यस्य माधवस्य कृतौ सर्वदर्शनसंग्रहे स्पष्टतया परिलक्ष्यते चार्वाकमतम् – प्रत्यक्षैकप्रमाणवादितयानुमानादेरनङ्गीकारेण प्रामाण्याभावात्।[68] अतः चार्वाकदर्शने स्वाभाविकतया वर्तमानकालिकविषयकं स्वीकरणार्थं प्रत्यक्षं प्रमाणरूपेण स्वीकृतं मण्डितञ्चेति।

## उपसंहारः

भारतीयदर्शनपरम्परायां चार्वाकाः नास्तिकशिरोमणिरूपेण परिचिताः सन्ति। भारतीये वाङ्मये विविधे शास्त्रे चार्वाकानामुपस्थितिर्लक्षणीया। तेषां रचितग्रन्थानां स्वल्पतासत्वेऽपि तत्त्वगतवैचित्र्यं सर्वजनप्रसिद्धं रमणीयञ्चेति कारणात् ते लोकायतिका अभिधया विभूषिताः। चार्वाकास्तेषां समर्थितमतवादान् स्वीकरणार्थमतीव सुकौशलेनानुमानप्रमाणादिप्रमाणं खण्डनं कृत्वा केवलं प्रत्यक्षप्रमाणं मण्डनं कृत्वा भारतीयशास्त्रीयपरम्परायां नैपुण्यं प्रदर्शितवन्तः। तदपि च वक्तुमर्हति यत् चार्वाकेतरभारतीयदर्शनानां तत्त्वगतमतसौष्ठवं विकाशाय चिन्तनवैचित्रस्य समृद्ध्यर्थञ्च दर्शनप्रस्थाने चार्वाकानां योगदानमतीव गुरुत्वपूर्णमिति शम्।

## अन्त्यटीका

[1]. मुण्डकोपनिषद् – 1/1/4-5

[2]. सांख्यकारिका, भूमिकांशः, थानेशचन्द्रउपैति, पत्राङ्कः - 2

[3]. सांख्यकारिका, भूमिकांशः, ज्वालाप्रसादगौड़ः, पत्राङ्कः - 1

[4]. अष्टाध्यायी – 3/3/127

[5]. तदेव – 4/4/60

[6]. सिद्धान्तकौमुदी, अष्टाध्यायीसूत्रसंख्या – 4/4/60

[7]. मनुसंहिता – 2/11

[8] . Indian Philosophy(Vol-I), S. Radhakrishnan, pp-277-278

[9]. तर्कसंग्रहः - 27

[10]. तदेव - 27

[11]. तर्कभाषा - 3

[12]. मानमेयोदयः - 14

[13]. सांख्यकारिका - 4

[14]. सांख्यकारिकायाः गौड़पादकृतभाष्यम् - 4

[15]. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 5

[16]. सर्वसिद्धान्तसंग्रहे लोकायतिकपक्षप्रकरणे - 2

[17]. बार्हस्पत्यसूत्रम् - 70

[18]. तदेव - 92

[19]. चार्वाकषष्टिः - 48

[20]. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 8

[21]. तदेव - 8

[22]. तदेव - 8

[23]. तदेव - 6

[24]. तदेव - 16

[25]. तर्कसंग्रहः, अनुमानखण्डम् - 1

[26]. तदेव, अनुमानखण्डम् - 2

[27]. तदेव, अनुमानखण्डम् - 2

[28]. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 16

[29]. भाषापरिच्छेदः - 50

[30]. तर्कसंग्रहदीपिका, अनुमानखण्डम्- 3

[31]. तदेव, अनुमानखण्डम्- 3

[32]. सर्वदर्शसंग्रहे चार्वाकदर्शनम् - 16

[33]. भाषापरिच्छेदमुक्तावली - 60

[34]. तर्कसंग्रहदीपिका, शब्दखण्डम् - 1

[35]. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 17

[36]. तदेव - 17

[37]. तर्कसंग्रहः, अनुमानखण्डम् - 11

[38]. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 17

[39].तदेव - 18

[40]. सर्वदर्शनसंग्रहे वासुदेवशास्त्रीकृटीकायाम्, पृष्ठा-11

[41]. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् 18-19

[42]. तदेव - 19

[43]. बार्हस्पत्यसूत्रम् - 71

[44]. तर्कसंग्रहः, शब्दखण्डम् - 1

[45]. द्रष्टव्यम्, संस्कृत साहित्येर रूपरेखा, विमानचन्द्र भट्टाचार्य, पादटीकांश, पृष्ठाङ्क - 4

[46]. सर्वदर्शनसंग्रहे वासुदेवशास्त्रीकृटीकायाम्, पृष्ठा-3

[47]. तदेव – पादटीकांश, पत्रांक - 2

[48]. अर्थसंग्रहः, पत्रांकः - 11

[49]. बृहदारण्यकोपनिषद् – 1/5/16

[50]. ईशावास्योपनिषद् - 11

[51]. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 11

[52]. सर्वदर्शनसंग्रहे वासुदेवशास्त्रीकृटीकायाम्, पृष्ठा-4-5

[53]. तत्रैव, पृष्ठा-5

[54]. तत्रैव, पृष्ठा-5

55. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 11

56. तदेव – 23-24

57. अर्थसंग्रहः, पत्राङ्क - 11

58. तदेव – पत्राङ्क - 13

59. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 12

60. बार्हस्पत्यसूत्रम् – 75-76

61. तदेव - 56

62. तदेव - 74

63. सांख्यतत्त्वकौमुदी - 4

64. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 26

65 . तर्कसंग्रहः - 33

66. बार्हस्पत्यसूत्रम् - 70

67. सर्वसिद्धान्तसंग्रहे लोकायतिकपक्षप्रकरणम् – 2-3

68. सर्वदर्शनसंग्रहे चार्वाकदर्शनम् - 8

## निर्वाचितग्रन्थपञ्जी

### मुख्यग्रन्थाः

*अष्टाध्यायी सूत्रपाठः* (पाणिनिकृतः),गुरुप्रसाद शास्त्री(वृत्तिकारः सम्पादकश्च), संस्करण 2015, चौखाम्वा सुरभारती प्रकाशन, वाराणसी

*उपनिषद्*, अतुल चन्द्र सेन, सीतानाथ तत्त्वभूषण, महेशचन्द्र घोष(सम्पादकाः), संस्करण 2018, हरफ प्रकाशनी, कलकाता

*तर्कभाषा* (केशवमिश्रकृता), सत्यजित् लायेक(सम्पादकः), पुनर्मुद्रण 2य संस्करण 2017,संस्कृत बुक डिपो, कलकाता

*तर्कसंग्रहः* (अन्नंभट्टकृतः), नारायण चन्द्र गोस्वामी(सम्पादकः), 3य संस्करण 1413 बङ्गाव्दः, संस्कृत पुस्तक भाण्डार, कलकाता

*न्यायसिद्धान्तमुक्तावली*(विश्वनाथकृता), हरिराम शुक्ल(सम्पादकः), संस्करण 2019, चौखाम्वा प्रकाशन, वाराणसी

*मनुसंहिता* (मनुकृतः), पञ्चानन तर्करत्न(सम्पादकः), संस्करण 1993, संस्कृत पुस्तक भाण्डार, कलिकाता

*मानोमेयोदयः* (नारायणभट्टकृतः), दीननाथ त्रिपाठी(सम्पादकः), संस्करण 1990, संस्कृत कलेज, कलिकाता

*वेदान्तसारः* (सदानन्दकृतः), स्वामी अमृतत्वानन्द(सम्पादकः), संस्करण 2016, उद्बोधन कार्यालय, कलकाता

*सर्वदर्शनसंग्रहः (श्रीमत्सायणमाधवाचार्यप्रणीतः)*, अभ्यंकरोपाह्ववासुदेवशास्त्री (व्याख्याकारः), संस्करणम् 1924, प्राच्यविद्यासंशोधनमन्दिरम्, पुण्यपत्तनम्

*सायणमाधवीयसर्वदर्शनसंग्रहे चार्वाक-बौद्ध-जैनदर्शन*, अमित भट्टाचार्य (सम्पादकः), अखण्ड संस्करण 2013, संस्कृत पुस्तक भाण्डार, कलकाता

*सायणमाधवीयसर्वदर्शनसंग्रहः* (1म खण्ड), सत्यज्योति चक्रवर्ती(सम्पादकः), संस्करण 2014, साहित्यश्री, कलकाता

*सांख्यकारिका* (ईश्वरकृष्णविरचिता), ज्वालाप्रसाद गौड़(सम्पादकः), संस्करण 2016, चौखाम्वा विद्याभवन, वाराणसी

*सांख्यकारिका* (ईश्वरकृष्णविरचिता), थानेशचन्द्र उपैति(सम्पादकः), संस्करण 2011, चौखाम्वा संस्कृत प्रतिष्ठान, दिल्ली

*सांख्यतत्त्वकौमुदी* (वाचस्पतिमिश्रकृता), हरिराम शुक्ल(सम्पादकः), 2य संस्करण 2011, चौखाम्वा प्रकाशन, वाराणसी

**गौणग्रन्थाः**

घोष, दीपक, *भाषापरिच्छेदसमीक्षा*, कलकाता, संस्कृत पुस्तक भाण्डार, संस्करण 2003

बन्द्योपाध्याय, शान्ति, *वैदिक साहित्येर रूपरेखा*, कलिकाता, संस्कृत पुस्तक भाण्डार, संस्करण 1993

बागची, योगेन्द्रनाथ, *भारतीय दर्शनशास्त्रेर समन्वय*, कलिकाता विश्वविद्यालय, संस्करण 2013

भट्टाचार्य, उमेशचन्द्र, *भारतदर्शनसार,* कलिकाता, विश्वभारती ग्रन्थालय, संस्करण बङ्गाव्दः 1356

भट्टाचार्य, विमानचन्द्र, *संस्कृत साहित्येर रूपरेखा*, कलिकाता, विद्योदय लाइब्रेरी प्रा. लि., संस्करण 2000

शर्मा, पूर्णचन्द्र, *सांख्यकारिका*, कलकाता, पश्चिमबङ्ग राज्य पुस्तक पर्षत्, संस्करण 2007

शास्त्री, दक्षिणारञ्जन, *चार्वाक दर्शन*, कलकाता, पश्चिमबङ्ग राज्य पुस्तक पर्षत्, संस्करण 2013

Chatterjee, K.N., *Mimamsa Nyaya Prakasa of Apadeva*, Calcutta, Rabindra Bharati University, Ed. 1993

Datta, Pradyot Kumar, *Arthasamgraha*, Kolkata, Sanskrit Pustak Bhandar, Ed. 2002

Radhakrishnan, S., *Indian Philosophy*(Vol-I), London, George Allen & Unwin Ltd., Ed. 1923

# PRABODHACANDRODAYE PRATIPHALITAṀ CĀRVĀKAJAINADARŚANAYOḤ DĀRŚANIKATATTVAM
# प्रबोधचन्द्रोदये प्रतिफलितं चार्वाकजैनदर्शनयोः दार्शनिकतत्वम्

**Dr. Ratul Bujar Baruah**

**Abstract**

The Prabodhacandrodayam of Śrīkṛṣṇamiśra is a Sanskrit allegorical drama in six acts. The dramatist draws a picture of conflict between virtue and vice through some symbolic characters in the drama. Abstract human qualities are depicted here as living characters. Viveka, the hero of the drama, was found to engage himself in destroying foes like Mahāmoha for a noble cause i.e. liberating the Supreme Being from bondage. The conflict between Viveka and Mahāmoha occurs due to the arrest of Puruṣa or the Supreme Being by the followers of Mahāmoha. The dramatist makes an attempt to synthesize Advaita Vedānta with the doctrine of Viṣṇubhakti intelligently. The drama presents the views relating to orthodox and heterodox system of Indian philosophy. The dramatist presents in the 3rd act of his drama the important doctrines of Buddhism through the characters of Buddhist Monk and Ahaṁkāra. The Digambara monk in the 3rd act represents Jaina views, while the Cārvaka philosophy is presented in the 2nd act of the drama. The paper deals at length the philosophical views of the Cārvāka and Jaina system of Indian philosophy as reflected in the drama Prabodhacandrodayam of Śrīkṛṣṇamiśra.

श्रीकृष्णमिश्रविरचितं प्रबोधचन्द्रोदयं नाटकं दार्शनिकनाटकरूपेण संस्कृतनाट्य-जगति प्रसिद्धमस्ति। षष्ठाङ्कविशिष्टे दार्शनिकनाटकेऽस्मिन् आस्तिकनास्तिकदर्शनयोः

यद्यपि प्रभावो दरीदृश्यते तथापि नाटकेऽस्मिन् अद्वैतवेदान्त एव वस्तुतस्तु प्रदर्शितो भवति। दृश्यकाव्येऽस्मिन् अङ्कितानि चरित्राणि प्रतीकात्मकानि। अत्र मानवप्रवृत्तयः चरित्ररूपेण कविः समुपस्थापयति। सुललितभाषया दार्शनिकतत्वानि उपस्थाप्य नाट्यकारः कविप्रतिभायाः स्वाक्षरं दत्तवान्। शान्तरसप्रधानं नाटकमिदं राजाकीर्तिवर्मणे महानन्दप्रदातुं रचितमासीत्। तत्तु प्रस्तावनायामेव घोषितम्– ''तद्वयं शान्तरसप्रयोगा-भिनयेनात्मानं विनोदयितुमिच्छामः। ततो यत्पूर्वमस्यद्गुरुभिस्तत्रभवद्भिःश्रीकृष्णमिश्रैः प्रबोधचन्द्रोदयं नाम नाटकं निर्माय भवतः समर्पितमासीत् तदद्य राज्ञः श्रीकीर्तिवर्मणः पुरस्तादभिनेतव्यं भवता''[१] इति। नाट्यशास्त्रानुसारेण संसारेऽस्मिन् नास्ति किमपि शास्त्रम्, कापि विद्या, कोऽपि योगः, किमपि वा ज्ञानं यन्नाटके न दृश्यते[२]। नाट्य-शास्त्रमतमिदं प्रबोधचन्द्रोदये सार्थकरूपेण प्रयोगं कृतं नाट्यकारेण। श्रीकृष्णमिश्रेण मानवहृदयस्थिताः कामाक्रोधादिविविधप्रवृत्तयः शान्तरसप्रधाने नाटकेऽस्मिन् विशिष्ट-चरित्ररूपेण परिकल्पिताः।

भारतीयदर्शनपरम्परायां षड् आस्तिकदर्शनानि त्रीणि नास्तिकदर्शनानि च सन्ति। विभाजनमिदं प्राचीनभारतवर्षस्य ज्ञानधाराया अव्ययकोशरूपस्य वेदस्य कर्त्तृत्वविषये कृतम् , यानि दर्शनानि वेदानां प्रामाण्यम् उररीकुर्वन्ति तानि आस्तिकदर्शनानीति व्यवह्रियन्ते, तद्विपरीतञ्च नास्तिकम्। तदनुसारेण न्याय-वैशेषिक-सांख्य-योगमीमांसा-वेदान्ताश्चेति वेदस्य प्रामाण्यं स्वीकरणीयत्वात् एतानि दर्शनानि आस्तिकदर्शनानीति कथ्यन्ते। चार्वाक-जैन-बौद्धदर्शनानि वेदस्य प्रामाण्यं न स्वीकुर्वन्ति, अतस्तानि नास्तिकदर्शनानीति कथ्यन्ते।

नाटकमिदं श्रीकृष्णमिश्रस्य विविधदर्शनशास्त्रावगाहिज्ञानं प्रकटयति। सांख्यवेदान्त-न्याय-मोमांसाप्रभृति-आस्तिकदर्शनानां चार्वाक-जैनप्रभृति-नास्तिक-दर्शनानाञ्च प्रतिपाद्य-विषयाः नाटकेऽस्मिन् व्यञ्जिताः सन्ति। यद्यपि नाटकमिदम् अद्वैतवेदान्तमूलकं परन्तु चार्वाकः जैनः बौद्धश्चेति त्रयाणां नास्तिकदर्शनानां ज्ञानवैभवं दृश्यते। नाटकस्यास्य द्वितीयेऽङ्के वैचित्र्यपूर्णचरित्रचित्रणेन नास्तिकदर्शनान्तर्गतस्य बौद्धजैनदर्शनयोः दार्शनिकं तत्वं सुचारुतया वर्णितमस्ति। नाट्यकारेण नाटकस्य तृतीयेऽङ्के बौद्धदर्शनस्य गुरुत्वपूर्णं तत्वमुपस्थापितम्। बौद्धदर्शने क्षणिकत्ववादे उक्तमस्ति यत् जगतः सर्वं पदार्थं क्षणिकं वर्तते, सर्वस्य नाशोऽवश्यमेव भवति, स्वमुक्तये सर्वैः स्वयमेव प्रयतनीयम्। पदार्थस्य अनित्यत्वं बौद्धदर्शने स्वीकृतं भवति। बौद्धदर्शनान्तर्गतस्य तत्वं नाटकेऽस्मिन् बौद्धभिक्षवचनादेव प्रतिफलितं

भवति– 'सर्वे क्षणक्षयिण एव निरात्मकाश्च' इति[३]। अंशेऽस्मिन् बौद्धदर्शनस्य क्षणिकत्ववादस्य नैरात्मवादतत्वस्यापि चित्रणं भवति। सर्वदर्शनसंग्रहेऽपि उक्तम्– 'यत्सत्तत्क्षणिकम्'[४]। ये खलु जनाः वेदान्तमेवाश्रित्य बौद्धदर्शनं त्यजन्ति तान् सर्वान् अहंकारः द्वितीयेऽङ्के निन्दयति।

प्रतीकधर्मिनाटकस्यास्य द्वितीयेऽङ्के महामोहवचने चार्वाकदर्शनस्य समुल्लेखो दृश्यते– ''तदेतदस्मदभिप्रायानुबन्धिना वाचस्पतिना प्रणीय चार्वाकाय समर्पितम्।''[५] सर्वदर्शनसंग्रहे तु बृहस्पतेः अनुगामिरूपेण चार्वाकाः उल्लिख्यन्ते – 'बृहस्पतिमतानुसारिणा नास्तिक–शिरोमणिना चार्वाकेण...'[६]। इदमेव दर्शनं लोके बाहुल्येन आयत्वात् लोकायतदर्शननाम्नापि प्रसिद्धम् ''..... तस्य चार्वाकमतस्य 'लोकायतम्' इत्यन्वर्थम् अपरं नामधेयम्''[७] इति। महामोहचार्वाकयोः वार्तालापे अस्य दर्शनस्य प्रसंग उत्थापितो भवति। महामोहेन उक्तम्– ''सर्वथा लोकायतमेव शास्त्रं यत्र प्रत्यक्षमेव प्रमाणम् पृथिव्यप्तेजोवायवस्तत्वानि''[८] लोकायतदर्शनमतेन प्रत्यक्षमेव प्रमाणं भवति, तद्व्यतिरिक्तं प्रमाणं नास्ति। सर्वदर्शनसंग्रहे प्रोक्तम्– 'प्रत्यक्षैकप्रमाणवादितया अनुमानादेः अनङ्गीकारेण प्रामाण्याभावात्'[९]। केवलं बुद्धिगम्यमात्रमेव विषयं चार्वाकाः स्वीकुर्वन्ति। तेषां मते इन्द्रियजनितज्ञानमेव यथार्थज्ञानं भवति। अस्मिन् जगति चत्वारः पदार्थाः वर्तन्ते–पृथिव्यप्तेजो–वायवस्तत्वानि। माधवाचार्येण उक्तम्–'तत्र पृथिव्यादीनि भूतानि चत्वारि तत्वानि'[१०]। पृथिव्यादिभूतचतुष्टयमेव सत्यम्। चार्वाकानां मते चत्वारि भूतानि मिलित्वा देहो भवति। देहात् स्वयमेव चैतन्यम् उपजायते। चार्वाकाः परलोकं न स्वीकुर्वन्ति। इहलोकान्नास्तिपरः कश्चिदपि लोकः। चार्वाकाः ईश्वरस्थायित्वं नैव मन्यन्ते। इमे नास्तिकाः अर्थकामौ एव पुरुषार्थौ इति मन्यन्ते। तन्मते मरणमेव अपवर्गः मुक्तिर्वा। उच्यते महामोहेन– ''अर्थकामौ पुरुषार्थौ भूतान्येव चेतयन्ते। नास्तिः परलोकः। मृत्युरेवापवर्गः''[११]। चार्वाकाः अनुमानमपि न स्वीकुर्वन्ति। ते वदन्ति यत् सुखमेव स्वर्गम्, दुःखमेव नरकमिति। दार्शनिकनाटकेऽस्मिन् चार्वाकाभिधेयचरित्रविशेष लोकायतदर्शनस्य नीतिनां प्रयोगो दृश्यते। चार्वाकेन द्वितीयेऽङ्के उक्तम् यत् दण्डनी–तिरेव प्रकृतविद्या। ऋक्यजुसामवेदादयः धूर्ताणां प्रलापमात्रमेव– ''वत्स, जानासि दण्डनीतिरेव विद्या .... धूर्तप्रलापस्त्रयी। स्वर्गोत्पादकत्वेन विशेषाभावात्''[१२]। मतमिदं सर्वदर्शनसंग्रहेऽपि उक्तम्– ''त्रय्या धूर्तप्रलापमात्रत्वेन, अग्निहोत्रादेः जीविका–

मात्रप्रयोजनत्वात्''[१३]। अत्र भण्डधूर्तनिशाचररेव वेदानां कर्त्तृरूपेण स्वीकृताः। नाटके चार्वाकः वैदिकयज्ञानां प्रति तस्य विरोधं प्रकाशयति–

स्वर्गः कर्त्तृक्रियाद्रव्यविनाशे यदि यज्वनाम।
ततो दावाग्निदग्धानां फलं स्याद्भूरि भूरुहाम्॥[१४]

वेदविहितम् अग्निहोत्रादिकं कर्म सर्वथा अर्थशून्यमिति चार्वाकाः मन्यन्ते। धर्माधर्मविषये ते अतीव उदासीनाः। अग्निहोत्रादिकं पौरुषहीनानां जीविकामात्रम्। ऋग्वेदादिषु तथा त्रिदण्डेषु अर्थात् वाक्‌दण्ड–मनदण्ड–कायदण्डादिषु चार्वाकस्य विरागभावः प्रकटितो भवति–

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्।
प्रज्ञापौरुषहीनानां जीविकेति बृहस्पतिः॥[१५]

तद्विषये मनुस्मृतौ उक्तम्–

वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च।
यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते॥[१६]

दृश्यकाव्यस्यास्य द्वितीयाङ्के वैषयिकं सुखं न परिहरणीयम् इति चार्वाकेन उक्तम्– 'त्याज्यं सुखं विषयसंगमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचारणैषा'[१७]। अनेन श्लोकेन सह चार्वाकदर्शनसन्मतस्य वर्णितवस्तुविषयस्य साम्यमस्तीति वक्तुं शक्यते[१८]। चार्वाकस्य अयमाशयः – यस्य मते दुःखसमन्वितं संसारसुखं परिहरणीयम् स तु निश्चितमेव ज्ञानरहित–पशुतुल्यपुरुषः। चार्वाकाः चैतन्ययुतं शरीरमेव आत्मा इति स्वीकुर्वन्ति। अतः मरणादनन्तरं मृतानां तृप्तिप्रदानाय श्राद्धस्य व्यवस्थापि अर्थहीना इति चार्वाकेन प्रकाशितम्। यथा निर्वाणदीपशिखाप्रज्वालनाय तैलं व्यर्थं भवति तथैव मृतप्राणितृप्तये कृतं श्राद्धादिकर्म अपि असार्थकम्। तत्रोच्यते–

मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम्।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्धयेच्छिरवाम्।।[१९]

प्रतीकात्मकनाटकेऽस्मिन् तृतीयेऽङ्के श्रीकृष्णमिश्रेण नाट्यप्रतिभया जैनमतस्यालोचनं कृतम्। मञ्चे प्रवेशादनन्तरमेव दिगम्बरनामकेन चरित्रेण आत्मनः स्वरूपं समुपस्थाप्य उच्यते यत् शरीरस्य मध्यभागे आत्मा दीप इव पकाशमानो भवति। तेनोक्तम्– 'नवद्वारपुरीमध्ये आत्मा दीप इव ज्वलति'[२०]। जैनदर्शने द्विविधाः जीवाः सन्ति मुक्तजीवाः संसारिजीवाश्चेति। सर्वदर्शनसंग्रहे उक्तम्– भवाद्भवान्तरप्राप्तिमन्तः

संसारिणः। भवान्तरप्राप्तिविधुरा मुक्ताः[२१]। प्रकाशितानन्तज्ञानवीर्यदर्शनसुखाः मुक्ताः, तद्विपरीतास्तु संसारिजीवाः। पुनरपि दिगम्बरः जैनतत्वदिशा मोक्षस्वरूपं प्रतिपादयन् बौद्धभिक्षुणा सह तस्य विरोधं प्रकटयति।[२२] जैनतत्वदिशा मोक्षस्तु सम्यग्दर्शनज्ञान-चारित्रात्मकः। सम्यग्दर्शनस्य सम्यग्ज्ञानस्य सम्यग-चारित्रस्य च युगपदवस्थानेन मुक्तिमार्गो भवति। माधवाचार्येण सम्यग्दर्शनं समुपस्थाप्य श्लोकोऽयं उद्धृतः -

रुचिर्जिनोक्ततत्वेषु सम्यकश्रद्धानमुच्यते।
जायते तन्निसर्गेण गुरोरधिगमने वा॥[२३]

सम्यग्ज्ञानेनैव जीवः सत्यमसत्यं विचारयितुं शक्यते। सम्यग्ज्ञानस्य स्वरूपप्रसङ्गे माधवाचार्यः कथयति- 'येन स्वभावेन जीवादयः पदार्था व्यवस्थितास्तेन स्वभावेन मोहसंशयरहितत्वेनावगमः सम्यग्ज्ञानम्'। तदुक्तम्-

यथावस्थिततत्वानां संक्षेपाद्विस्तरेण वा।
योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः॥[२४]

अवस्थितानां तत्वानां पदार्थानां वा तदनुरूपः यः बोधः संक्षेपेण विस्तरेण वा भवतु तज्ज्ञानं सम्यग्ज्ञानं स्यात्। अतः बुद्धानुशासनं परिहरणीयम् अर्हतानुशासनमेव ग्रहणीयम् इति दिगम्बरस्याभिप्रायो नाटके सूचितो भवति। दिगम्बरेण प्रोक्तं यत् दैहिकशुद्धिः न परमशुद्धिः। मलमयपुद्गलेन निर्मितेन शरीरं जलेन शुद्धिकर्त्तुं न शक्यते। पुद्गलस्य प्रसङ्गः दिगम्बरवचनेन नाटकेऽस्मिन् उत्थापितो भवति- 'मलमयपुद्गलपिण्डे सकलजलैरपि कीदृशीं शुद्धिः'[२५]। केचन जैनदर्शनस्य सप्ततत्वानि प्रकाशयन्ति - ''जीवाजीवास्त्रवबन्धसम्वर-निर्जरमोक्षास्तत्वानि''।[२६] जीवाः अनन्ताः शाश्वताश्च। जीवभिन्नं यद्रव्यं तदजीव इति ज्ञायते। अजीवेषु अन्यतमः पुद्गलो नित्यः अचेतनः च। पुद्गले रूप-रस-गन्ध-स्पर्शाः चत्वारि गुणावर्तन्ते।[२७] पुद्गलाः द्विविधाः- अणवः स्कन्धाश्च।

दिगम्बरमुखात् बद्धजीवस्य स्थितिविषये जैनमतं प्रतिफलितं भवति। उमास्वामि-मनुसृत्य वक्तुं शक्यते यत् बद्धजीवो देहे कदाचिद् उत्कर्षं लभते कदाचित् वा अपकर्षं लभते देहस्यावयवानुसारम्। बद्धस्य जीवस्य एषः एव धर्मः[२८]। तद्रूपं वर्णनम् 'ज्ञातुं वपुः परिमितः क्षमते त्रिलोकीं जीवः कथं कथय संगतिमन्त्ररेण' इत्यस्मिन् श्लोकेऽपि उपलभ्यते[२९]। दिगम्बरस्य अयमाशयः- यद्वत् कुम्भनिहितो दीपो

गृहस्यान्तर्भागं प्रकाशयितुं न शक्नोति तद्वत् वपुना परिमितः आत्मा त्रिलोकीं ज्ञातुं न शक्यते।

दिगम्बरेण 'अर्हत्' इति सर्वज्ञरूपेण नाटकस्यास्य तृतीयेऽङ्के स्वीकरोति– 'ग्रहनक्षत्रचारचन्द्रसूर्यो– परागलुप्तलाभपरमार्थज्ञानसन्धानदर्शनेन निरूपितं सर्वज्ञत्वं भगवतोऽर्हतः'।[३०] आनन्दमयावस्थाप्राप्तो जीव एव अर्हदभिधेयः। दिगम्बरमतानुसारं मुक्तजीवत्वात् स हि सर्वज्ञो भवितुमर्हति। अर्हत्स्वरूपप्रसङ्गे श्रीहेमचन्द्रसूरेः मतमिदं सर्वदर्शनसंग्रहे प्राप्यते–

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।
यथास्थितार्थवादी च देवोऽर्हन्परमेश्वरः॥[३१]

संस्कृतनाट्यसाहित्ये भारतीयदर्शनस्य प्रभावः प्राचीनकालादेव परिलक्ष्यते। एवं प्रकारेण श्रीकृष्णमिश्रेण तदीये प्रबोधचन्द्रोदये नाटकीयपात्राणां सुसमावेशेन भारतीयदर्शनस्य चार्वाकजैनदर्शनयोः भिन्नविषयाः प्रतिपाद्यन्ते। सुललितभाषया दार्शनिकतत्वानि उपस्थाप्य नाट्यकारः कविप्रतिभायाः स्वाक्षरं दत्तवान्। संस्कृतनाट्यजगति दार्शनिकनाटकरूपेण श्रीकृष्णमिश्रस्य काव्यमिदं नितराम् उल्लेखनीयम् अवदानमिति वक्तुं शक्यते इति दिक्।

**सन्दर्भाः**

१. प्रबोधचन्द्रोदयम् (प्र.च.), पृ. ४

२. न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ यागो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते॥ – नाट्यशास्त्रम्, १.११६

३. प्र.च., ३.८

४. सर्वदर्शनसंग्रहः (स.स.), पृ. ३३

५. प्र.च., पृ.४०

६. स.स., पृ. ३

७. तत्रैव, पृ ३

८. प्र.च., पृ ४०

९. स.स., पृ. ४

१०. तत्रैव, पृ. ४

११. प्र.च., पृ. ४०.

१२. तत्रैव, पृ. ४०

१३. स.स., पृ. ६

१४. प्र.च., २.१९

१५. तत्रैव, २.२६

१६. मनुस्मृतिः, १२.१०

१७. प्र.च., २.२३

१८. त्याज्यं सुखं विषयसंगमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचारणैषा।
व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान् को नाम भोस्तुषककर्णोपहितान्हितार्थी॥ स.स.,पृ,६

१९. प्र.च., २.२१

२०. तत्रैव, ६६

२१. स.स.पृ. १३०-१३१

२२. एषः जिनवरभाषितः परमार्थोऽयं मोक्षसुखदः - प्र.च.पृ. ६६

२३. स.स., पृ. ११८

२४. तत्रैव, पृ. ११९

२५. प्र.च., पृ. ६६

२६. स.स., पृ. १३५

२७. स्पर्श-रस-गन्धवर्णवन्तः पुद्गलाः - तत्रैव, १३२

२८. प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् - तत्तार्थसूत्रम्, ५/१६

२९. प्र.च. ३,११

३०. प्र.च., पृ ७४

३१. स.स., पृ. १०३.

**ग्रन्थसूची**

१. तत्तार्थसूत्रम्-आचार्यश्रीउमास्वामी, सम्पादकः- विजय कुमार जैन, विव ल्प प्रिन्टार्च, डेरादुन, २०११ (इ- संस्करणम्)

२. प्रबोधचन्द्रोदयः-कृष्णमिश्रः, सम्पादकः-सीता. के. नाम्बियार, मोतिलाल बनारसीदास प्लाबिचार्च प्राः लिः, दिल्ली, २०१२

३. सर्वदर्शनसंगहः-माधवाचार्यः, सम्पादकः-उमाशङ्कर शर्मा, चौखम्बा विद्याभवन, वाराणसी, २०१९